देवा ब्रह्मादयो वापि स्वरूपं न विदुस्तव ।
अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गसंस्थितम् ॥
वाञ्छितं कुरु देवेश दुष्कृतं चैव नाशय ।
कुरुष्व मे दयां देव संसारार्तिभयापह ॥' *—इति प्रार्थयेत् ।

**१३ । अथासनादिना कृष्णं पाद्यार्घ्याचमनैरपि ।**
**सेवेत मधुपर्केण पुनराचमनेन च ॥**

पाद्यादि-दीपान्तं 'ॐ यज्ञेश्वराये'ति प्रत्येकं पठेत् । तत्र पाद्यादिदीपान्तमन्त्रः—'ॐ यज्ञेश्वराय यज्ञसम्भवाय यज्ञपतये गोविन्दाय नमो नमः ।' इति

**१४ । पाद्यं श्यामाक-दूर्वाब्ज-विष्णुक्रान्ताभिरिष्यते ।**
**तिल-सर्षप-पुष्पाणि गन्धदूर्वाक्षतास्तथा ।**
**यवाः कुशाग्रमित्येतदर्घ्याष्टकमुदीरितम् ॥**
**१५ । जाती-लवङ्ग-कक्कोलैर्मतमाचमनीयकम् ।**
**घृतं दधि तथा क्षौद्रं मधुपर्कोऽभिधीयते ॥**

**( श्रीविष्णुधर्म्मः )**

**१६ । आज्यमेकपलं ग्राह्यं दध्नस्त्रिपलमेव च ।**
**मधुनः पलमेकन्तु मधुपर्कः स उच्यते ॥**
**१७ । 'हिरण्यगर्भ' इत्यादीन्नव मन्त्रान् जपंस्ततः ।**
**कृष्णं निर्मञ्छयेत् पिष्टदीपावल्या सुदृश्यया ॥**

* ग-करलिप्या 'स उच्यते' इत्यतः परम्—

अथासनम्—पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥

**( ऋग्वेदः १०।९०।२ )**

गौतमीयेऽपि—ॐ सर्वान्तर्यामिणे देव सर्ववीजमिदं ततः ।
आत्मस्थाय परं शुद्धमासनं कल्पयाम्यहम् ॥
अन्यत्रापि— आसनं भास्वरं देव क्षीरकाष्ठविनिर्मितम् ।
मया निवेदितं भक्त्या गृहाण परमेश्वर ॥
स्वागतम्— तस्य ते परमेशान स्वागतं स्वागतं भवेत् ।
कृतार्थोऽनुगृहीतोऽस्मि सकलं जीवितं तु मे ।
यदागतोऽसि देवेश चिदानन्दामयाव्यय ॥

अज्ञानाद्वा प्रमादाद्वा वैकल्यात् साधनस्य च । यदपूर्णं भवेत् कृत्यं तथाप्यभिमुखो भव ॥

पाद्यं पादाग्रतो दद्यात्—

एतावानस्य महिमा ऽतो ज्यायाँश्च पूरुष: ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि

(ऋग्वेद: १०।९०।३)

पाद्यादिदीपान्तमन्त्र:—

ॐ यज्ञेश्वराय यज्ञसम्भवाय यज्ञपतये गोविन्दाय नमो नम: ।

(श्रीहरिभक्तिविलास: १५।५३०)

गौतमीये—ॐ यद्भक्तिलेशसम्पर्कात् परमानन्दसंप्लव: ।
तस्य ते चरणोपान्ते पाद्यं शुद्धाय कल्पये ॥

अर्घ्यं शिरसि—

त्रिपादूर्द्ध्व उदैत् पुरुष: पादोऽस्येहाभवत् पुन: ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥

(ऋग्वेद: १०।९०।४)

ॐ यज्ञेश्वराय यज्ञसम्भवाय यज्ञपतये गोविन्दाय नमो नम: ।

आचमनम्—ततो विराड़जायत विराजो अधि पूरुष: ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुर:

(ऋग्वेद: १०।९०।५)

अनेनापि पुनराचमनं कार्यम् । ॐ यज्ञेश्वराय इत्यादि ।

गौतमीयेऽपि—वेदानामपि वेदाय देवानां दैवतात्मने ।
आचामं कल्पयामीशं सुधाया: श्रुतिहेतवे ॥

मधुपर्कं मुखे—ॐ यज्ञेश्वराय इत्यादि ।

अन्यत्रापि— सर्वकल्मषहीनाय परिपूर्णसुखात्मने ।
मधुपर्कमिदं देव कल्पयामि प्रसीद मे ॥

पुनराचमनीयकम्—ततो विराड़जायत विराजो अधि पूरुष: ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुर:
ॐ यज्ञेश्वराय इत्यादि ।

(ऋग्वेद: १०।९०।५)

गौतमीयेऽपि पुनराचमनीयकम्—

उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रत: ।
शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम् ॥"

'ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम
यः प्राणतो निमिषतो महित्वै—क इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम
यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम
येन द्यौरुग्रा पृथिवी च दृल्हा येन स्व स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम
आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम
यश्चिदापो महिना पर्यपश्यद् दक्षं दधाना जनयन्तीयज्ञम् ।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम
मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम'

(ऋग्वेदः १०।१२१।१-९ ; शुक्लयजुर्वेदः २३।१०-१३, ३२।६-७, २७।२५-२६, १२।१०२)

**१८। ततस्तिलैस्तमुद्वर्त्य 'मूर्धानं दिव' इतृयचा ।**

'मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनाना मासन्ना पात्रं जनयन्त देवाः'

(ऋग्वेदः ६।७।१ ; शु० य० ७।२४, ३३।८)

**(१८।) स्नापयेत्तं 'तिलोऽसी'ति तिलपिष्टजलैस्ततः ॥**

'तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः ।
प्रयत्नमद्भिः पृक्तः सुधया पुष्ट्वा पितॄन् लोकान् प्रीणाहि नः स्वाहा ॥'

**१९। तद्वस्त्रं परिवर्त्याथ स्थिरं तत्र निवेशयेत् ।**
**ततस्तं स्नापयेच्छुद्धं 'वरुणस्ये'ति वारिभिः ॥**

'वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि वरुणस्य

ऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥'

(शुक्लयजुर्वेदः ४।३६)

'तत् त्वा यामि ब्रह्मणा वन्दमानस् तदा शास्ते यजमानो हविर्भिः ।
अहेड़मानो वरुणेह बोध्यु रुशंस मा न आयुः प्र मोषीः'

(ऋग्वेदः १।२४।११)

'वरुणः प्राविता भुवन् मित्रो विश्वाभिरूतिभिः ।
करतां नः सुराधसः'

(ऋग्वेदः १।२३।६)

२०। स्नापयेत् पञ्चगव्येन तत्तन्मन्त्रयुजा ततः ॥
**( गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
अमीभिर्वस्तुभिः षड्भिः पञ्चगव्यमिति स्मृतम् ॥)**

**२१। गायत्र्यादाय गोमूत्रम्......( गायत्री तु प्रसिद्धा )**

**( २१। )......'गन्धद्वारे'ति गोमयम् ।**

'गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्व्वभूतानां त्वामिहोपह्वये श्रियम् ॥'

**( २१। ) 'आ प्यायस्वे'ति वै दुग्धम् ....**

'आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य संगथे'

(ऋग्वेदः १।९१।१६ ; शु० य० १२।११२)

**( २१। )......'दधिक्राव्णे'ति वै दधि ॥**

'दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्'

(ऋग्वेदः ४।३९।६ ; शुक्लयजुर्वेदः २३।३२)

**२२। 'तेजोऽसी'ति घृतं तत्र......**

'तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥'

(शुक्लयजुर्वेदः १।३१)

**( २२। )......'देवस्य त्वा' कुशोदकम् ।**

'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि वृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चामि ॥'

(शुक्लयजुर्वेदः ९।३०)

'आग्नये जुष्टं गृह्णामि, अग्नीषोमाभ्यां जुष्टं गृह्णामि ।'

( २२ । ) तत्तन्मन्त्रयुजा पञ्चामृतेन स्नपनं ततः ॥

(दुग्धं दधि घृतं क्षौद्रं सितेत्यमृतपञ्चकम् ॥

—तत्परिमाणं लेख्यम्)

२३ । 'पयः पृथिव्यां' पयसि......

'पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥'

(शुक्लयजुर्वेदः १८।३६)

( २३ । )......दध्नि पूर्वोक्तमेव हि ।

( २३ । ) 'घृतं घृते'ति हविषि......

'घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा ॥'

(शुक्लयजुर्वेदः ६।१९)

( २३ । )......'मधु वाता' मधुन्यपि ॥

'मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः
मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता
मधुमान्नो वनस्पति——————मधुमाँ अस्तु सूर्य्यः ।
माध्वीर्गावो भवन्तु नः'

(ऋग्वेदः १।९०।६-८ ; शुक्लयजुर्वेदः १३।२७-२९)

२४ । 'अपां रसमुद्वयसं' सितायां मन्त्र ईरितः ।

'अपांरसमुद्वयसंसूर्ये सन्तंसमाहितम् । अपांरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयाम-गृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥'

(शुक्लयजुर्वेदः ९।३)

( २४ । ) अभिषिच्योष्णतोयेन 'सप्त तेऽग्ने'ति माधवम् ॥

'सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा ॥'

(शुक्लयजुर्वेदः १७।७९)

२५ । 'या ओषधी'रिति प्रीत्या लिम्पेत् सर्व्वौषधिद्रवैः ।

**(मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।**
**शटी चम्पकमुस्तश्च सर्व्वौषधिगणः स्मृतः ॥)**

तत्र मन्त्रः—'या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च

**(ऋग्वेदः १०।९७।१, शु० य० १२।७५)**

**२६ । 'या ओषधी'रिति ततो महौषधियुताम्भसा ।**
**(सहदेवो वचा व्याघ्री बला चातिबला तथा ।**
**शङ्खपुष्पी तथा सिंही सूर्यावर्त्ता तथाष्टमी ।**
**महौषध्यष्टकं ह्येतन्महास्नानेषु योजयेत् ॥)**

तत्र मन्त्रः—'या ओषधीः सोमराज्ञी—र्बह्वीः शतविचक्षणाः ।
ता मह्यमस्मिन्नासने ऽच्छिद्राः शर्म यच्छत' इति

**(ऋग्वेदः १०।९७।१८ ; शुक्लयजुर्वेदः १२।९२)**

**( २६ । ) 'सुमङ्गली'ति मन्त्रेण मङ्गलद्रव्यैः पूजयेत् ॥**

(मङ्गलद्रव्याणि यथा—पद्मकं रोचना दूर्वा दर्भपिञ्जलमेव च ।
जातिपुष्पं कुन्दपुष्पं मङ्गलानि निवेशयेत् ॥ इति )

तत्र मन्त्रः—'सुमङ्गलीरियं बधू—रिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वाया—ऽथास्तं वि परेतन'

**(ऋग्वेदः १०।८५।३३)**

**२७ । 'आब्रह्मन्नि'ति मन्त्रेण ततो बीजाष्टकेन च ।**
**(यव-गोधूम-नीवार-तिल-श्यामाक-शालयः ।**
**प्रियङ्गवो ब्रीहयश्च बीजाष्टकमिदं स्मृतम् ॥**

मन्त्रः—'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥'

**(शुक्लयजुर्वेदः २२।२२)**

**( २७ । ) 'हिरण्याक्षे'ति मन्त्रेण, 'पावमानी'भिरेव वा ।**
**स्नापयेद्रत्नतोयेन, रत्नं मुक्तादिकं भवेत् ॥**

'हिरण्याक्षः सविता देव ओगाद्दधद्रत्नानि दाशुषे वीर्याणि ।'
'पावमानीः स्वस्त्ययनी सुदुघा हि घृतश्चुतः ।

ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतं हितम् ।
पावमानीर्दिशन्तु न इमं लोकमथो अमुम् ।
कामान् समर्द्धयन्तु नो देवैर्देवीः समाहिताः ।
येन देवाः पवित्रेणात्मानं पुनते सदा ।
तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ।
प्राजापत्यं पवित्रं शतो द्यामं हिरण्मयम् ।
तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ।
इन्द्रः सुनीति सहमा पुनातु सोमः स्वस्त्वचा वरुणः समीच्या ।
यमो राजा प्रमृणाभिः पुनातु मां जातवेदा मूर्जयन्त्या पुनातु ।'

**२८ । 'सरस्वत्यै' इति ततः सिञ्चेत् पुष्पोदकेन च ।**

'सरस्वत्यै भैषज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामि ।'

(शुक्लयजुर्वेदः २०।३)

**( २८ । ) स्नापयेत् फलतोयेन ततो 'याः फलिनी'रिति ॥**

'याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः
वृहस्पतिप्रसूता—स्ता नो मुञ्चन्त्वंहसः'

(ऋग्वेदः १०।९७।१५ ; शुक्लयजुर्वेदः १२।८९)

**२९ । ततो गन्धयुताम्भोभिः सावित्र्या चाभिमन्त्रितैः ।**
**( कस्तूर्य्यगुरु-सत्वादिर्गन्ध इत्यभिधीयते ॥ )**

**( २९ । ) चन्दनेनानुलिप्याथ 'द्रुपदादिव' इतृचञ्चा ।**

'द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥'

(शुक्लयजुर्वेदः २०।२०)

**( २९ । ) 'समुद्रं गच्छ' मन्त्रेण स्नापयेच्चन्दनोदकैः ॥**

'समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवं सवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाहोरात्रे गच्छ स्वाहा छन्दांसि गच्छ स्वाहा देवं सवितारं गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा दिव्यं नभो गच्छ स्वाहाग्निं वैश्वानरं गच्छ स्वाहा । मनो मे हार्दि यच्छ दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहा ॥'

(शुक्लयजुर्वेदः ६।२१)

**३० । ततः सहस्रधाराख्य-कलशेनामलाम्भसा ।**
**सिञ्चेत् पुन'स्तां सवितुर्वरेण्यस्ये'ति मन्त्रतः ॥**

'तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।
यामस्य कण्वो अदुहत् प्रपीनां सहस्रधारां पयसा महीं गाम् ॥'

(शुक्लयजुर्वेदः १७।७४)

**३१। सहस्रधाराकलसे वस्तुषट्कं क्रमात् पुनः ।**
**निक्षिप्य मन्त्रैस्तन्त्रोक्तैः सिञ्चेत् षोढ़ा बकीरिपुम् ॥**
**( ओषधी-गन्ध-वीज-पुष्प-फल-रत्नानीति षट् । )**

**३२। तत्र 'या ओषधो'रित्यमोषधीषु मनुर्भवेत् ।**
**'रथे अक्षेति' गन्धेषु, 'गन्धद्वाराम'थापि वा ॥**

**३३। 'आब्रह्मन्नि'ति वीजेषु, पुष्पे 'पुष्पवती' भवेत् ।**

'ओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः ।
अयं वो गर्भ ऋत्वियः प्रत्नंसधस्थमासदत् ॥'

(शुक्लयजुर्वेदः ११।४८)

**( ३३ । ) फलेषु 'पुष्पवत्ये'व, रत्ने'ष्वाशुः शिशानकः' ॥**
'आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ।'

(ऋग्वेदः १०।१०३।१ ; शु० य० १७।३३

**३४। पलं स्याद्दशभिष्टङ्कैः पलानां तु शतद्वयम् ।**
**षट्पञ्चाशद्युतं माति यत्र तं कलसं विदुः ॥**

**३५। अष्टाभिः कलसैः प्रीत्या गोविन्दमभिषेचयेत् ।**
**अकालमूलैः सुदृढ़ैः सुकण्ठैश्च समोदरैः ।**
**शुद्धाम्भःपूरितै'रेतो न्विन्द्र'मित्यादिकं पठन् ॥**

'एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृद्धांसं शुद्ध आशीर्वान् ममत्तु
इन्द्रः शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः
इन्द्रः शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि'

(ऋग्वेदः ८।९५।७-९)

**३६। तीर्थोदपूरितैः कृष्णं सिञ्चेत् षोड़शसंख्यकैः।**
**तुलसीचन्दनयुतैः पठन् पुरुषसूक्तकम्॥**

'ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं सर्वतो वृत्वा ऽत्यतिष्ठद्दशाङ्गुलम्
पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्
उतामृतत्वस्येशानो यदन्नेनातिरोहति
एतावानस्य महिमा ऽतो ज्यायाँश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि
त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि
ततो विराड़जायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः
तस्माद् यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।
पशून् ताँश्चक्रे वायव्या-नारण्यान् ग्राम्याश्च ये
तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्मा—द्यजुस्तस्मादजायत
तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः
तं यज्ञं वर्हिषि प्रोक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये
यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते
ब्राह्मणोऽस्य मुखमासी—द्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत
चन्द्रमा मनसो जात—श्चक्षोः सूर्य्यो अजायत।
श्रोत्राद्वायुश्च प्राणाश्च मुखादग्निरजायतः
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन्
यत् पुरुषेण हविषा देवा यज्ञमतन्वत।

वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः
सप्तास्यासन् परिधय—स्त्रिः सप्त समिधः कृताः।
देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्
यज्ञेन यज्ञमयजन्त देवा—स्तानि धर्म्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः'
शुक्लयजुर्वेदः ३१।१-१६ ; ऋग्वेदः १०।९०।१-५, ८-१०, ७, ११-१४, ६, १५-१६)

'अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥
प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा॥

यो देवेभ्य आतपति यो देवानां पुरोहितः।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये॥
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन्।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन् वशे॥

(ॐ) श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण॥'

(शुक्लयजुर्वेदः ३१।१७-२२)

**३७। ततोऽङ्गमार्जनं कृत्वा तद्वस्त्रं परिवर्त्य च।**
**'अभिवस्त्रे'ति मन्त्रेण सुवस्त्रे परिधापयेत्॥**

'अभि वस्त्रा सुवसनान्यर्षा—ऽभिः धेनूः सुदुघाः पूयमानः।
अभि चन्द्रा भर्तवे नो हिरण्या ऽभ्यश्वान् रथिनो देव सोम'

(ऋग्वेदः ९।९७।५०)

**३८। 'यज्ञोपवीत'मन्त्रेण यज्ञसूत्रं निवेदयेत्॥**

'यज्ञोपवीतं परमं पवित्रं, प्रजापतेर्यत् सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं, यज्ञोपवीतं बलमस्तु तेजः॥'

**३९। सहदेवा-सदाभद्रा-सूर्यावर्त्ता-कुशाग्रकैः।**
**शिरीष-रजनीभ्याञ्च 'काण्डात् काण्डे'ति मन्त्रतः॥**

**४० । निर्मञ्छ्य तम्.........**

'काण्डात् काण्डात् प्ररोहन्ती पुरुषः परुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥'

(शुक्लयजुर्वेदः १३।२०)

**( ४० । ).........ततो निम्बराजी-लवण-सर्षपैः ।**
**दृष्टिमुत्तार्य्य ते येषु मत्स्यमोचनमाचरेत् ॥**

**४१ । गृही पीठमथानीय कृत्वा पादाब्जधावनम् ।**
**पुनराचमनीयानि यथाविधि निवेदयेत् ॥**

**४२ । मङ्गलार्थन्तु कलशं सजलं करकान्वितम् ।**
**फलादि-सहितं रम्यं न्यसेदथ हरेः पुरः ॥**

**४३ । 'तच्चक्षु'रिति मन्त्रेण नेत्रोन्मीलनमाचरेत् ।**

'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥'

(शुक्लयजुर्वेदः ३६।२४ ; ऋग्वेदः ७।६६।१६)

**( ४३ । ) 'अञ्जते'ति तु मन्त्रेण विधाय नयनाञ्जनम् ।**

'अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमासु गृभ्णते'

(ऋग्वेदः ९।८६।४३)

**( ४३ । ) रोचनातिलकं कुर्याद् 'युञ्जन्ती'ति तु मन्त्रतः ॥**

'युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
रोचन्ते रोचना दिवि'

(ऋग्वेदः १।६।१ ; शुक्लयजुर्वेदः २३।५)

**४४ । दूर्वा अष्टोत्तरशतं तूलपञ्जीश्च मङ्गलाः ।**
**ततो मात्रादिहस्तेन धारयेदस्य मस्तके ॥**

**४५ । होमं तिलानां दानञ्च वापञ्चाथ समाचरेत् ॥**

तथा हि—'उद्वर्तनं तिलैः स्नानं हवनं वपनं तथा ।
कुर्याद् दानादने चेति षट्तिली नावसीदति ॥' इति

**४६ । दत्त्वा पुष्पाणि माल्याणि 'दीर्घायुत्वे'तृचा ततः ।**
**पीतं प्रतिसरं रम्यं बध्नीयान्मणिबन्धके ॥**

दीर्घायुत्वाय बलाय, वर्चसे सुप्रजस्त्वाय, चासा अथो जीव शरदः शतम् ।'

**४७ । 'प्रतिपदसी'त्यादर्शम्.......**

'प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोऽसि तेजसे त्वा ॥'

(शुक्लयजुर्वेदः १५।८)

**( ४७ । ) .......'घृतवत्या' घृतं तथा ।**
**प्रदर्श्य...........**

'घृतवती भुवनानामभिश्रियो—र्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा'

(ऋग्वेदः ६।७०।१ ; शुक्लयजुर्वेदः ३४।४५)

**( ४७ । ) ......चामरेणाथ, 'वातो वे'त्यभिवीजयेत् ॥**

'वातो वा मनो वा गन्धर्वाः सप्तविंशतिः ।
ते अग्रेऽश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः ॥'

(शुक्लयजुर्वेदः ९।७)

**४८ । ततो 'हिरण्यरूपे'ति भूषणं विनिवेदयेत् ॥**

'हिरण्यरूपः स हिरण्यसंदृ—गपां नपात् सेदु हिरण्यवर्णः
हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै'

(ऋग्वेदः २।३५।१०)

**४९ । ततः कृते तु गोदाने वन्दापनमिदं भवेत् ।**
**महीगन्धादिभिर्द्रव्यैस्तत्तन्मन्त्रसमन्वितैः ॥**

**५० । मही गन्धः शिला धान्यं दूर्वा पुष्पं फलं दधि ।**
**घृतं स्वस्तिक-सिन्दूरं शङ्ख-कज्जल-रोचनाः ॥**

**५१ । सिद्धार्थं काञ्चनं रौप्यं ताम्रं सिद्धार्थ-दर्पणौ ।**
**दीपः प्रशस्तपात्रञ्च वन्दनीयाः शुभे दिने ॥**

**५२ । 'भूरसी'ति महीं............... ( पूर्व्वोक्त एव )**

**( ५२ । )..........गन्धं 'त्वां गन्धर्वा' इति ब्रुवन् ।**

'त्वां गन्धर्वा अखनंस्त्वामिन्द्रस्त्वां बृहस्पतिः ।
त्वामोषधे सोमो राजा विद्वान् यक्ष्मादमुच्यत ॥'

(शुक्लयजुर्वेदः १२।९८)

**( ५२ । ) 'प्र पर्वतस्ये'ति शिलां.......**

'प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसि च इयानाः ।
ता आववृत्रन्नधरागुदक्ता अहिबुध्न्यमनु रीयमाणाः ।
विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि ।।'

( शुक्लयजुर्वेदः १०।१६ )

( ५२ । ) ......धान्यं 'धान्यमसी'ति च ।। (पूर्व्वोक्त एव)

५३ । दूर्वां तु काण्डात् 'काण्डे'ति...... (पूर्व्वोक्त एव)

( ५३ । ) ......पुष्पं तु 'श्रीश्च ते' इति । (पूर्व्वोक्त एव)

( ५३ । ) 'याः फलिनी'रिति फलं......(पूर्व्वोक्त एव)

( ५३ । ) ......'दधिक्राव्णे'ति वै दधि ।। (पूर्व्वोक्त एव)

५४ । घृतं 'घृतवती'त्येव......(पूर्व्वोक्त एव)

( ५४ । ) ......स्वस्तिकं 'स्वस्ति नः' पठन् । (पूर्व्वोक्त एव)

( ५४ । ) 'सिन्धोरिवे'ति सिन्दूरं......

'सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः'

( ऋग्वेदः ४।५८।७ ) ; ( शुक्लयजुर्वेदः १७।९५ )

( ५४ । ) ......शङ्खमग्निरृषिः पव- ।।

'अग्निरृषिः पवमानः पाञ्चजन्यः पुरोहितः ।
तमीमहे महागयम्'

(ऋग्वेदः ९।६६।२० ; शुक्लयजुर्वेदः २६।९)

५५ । कज्जलं तु 'समिद्धोऽञ्जन्'......

'समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः ।
वाजी वहन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ।।'

(शुक्लयजुर्वेदः २९।१)

( ५५ । ) ......'युञ्जन्ती'ति तु रोचनाम् । (पूर्वोक्त एव)

( ५५ । ) 'अन्नादि'ति तु सिद्धान्न'......

'अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिवत् क्षत्रं पयः सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।।'

( शुक्लयजुर्वेदः १९।७५-७२ )

( ५५ । ) ......'हिरण्ये'ति च काञ्चनम् ।। (पूर्वोक्त एव)

**५६ । 'रूपेण वो' इति रूप्यम्........**

'रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु ।
ऋतस्य पथा प्रेत चन्द्रदक्षिणा वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः ।।'

(शुक्लयजुर्वेदः ७।४५)

**( ५६ । ) ........'असौ यः' इति ताम्रकम् ।**

'असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चैनं रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड़ ईमहे ।।'

(शुक्लयजुर्वेदः १६।६)

**( ५६ । ) 'रक्षोहणे'ति सिद्धार्थं......**

'रक्षोहणं बलगहनं वैष्णवीमिदमहं तं बलगमुत्किरामि यं मे निष्टयो यममात्यो निचखानेदमहं तं बलगमुत्किरामि · यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं बलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्कृत्यां किरामि ।।'

(शुक्लयजुर्वेदः ५।२३)

**( ५६ । ) ......दर्पणः 'प्रतिपदसि' ।। ( उक्त एव )**

**५७ । दीपं 'श्रिये जात' इति क्रमादेकैकमादरात् ।**
**वन्दापयेत्........**

'श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधातु ।
श्रियं वसाना अमृतत्वमायन् भवन्तु सत्या समिथा मितद्रौ'

( ऋग्वेदः ९।९४।४ )

**( ५७ । ) .....ततः सर्वैरेभिर्मङ्गलवस्तुभिः ।।**

**५८ । पूर्णं प्रशस्तपात्रञ्च पाणिभ्यां धारयेत् कृती ।**
**पठन् 'स्वस्ति न इन्द्र'ेति 'मही गन्धः शिले'ति च ।**
**वन्दापयेदवहितः शनैर्वारत्रयं मुदा ।।**

**५९ । उपायनोपनयनं ततो गोकुलवासिभिः ।**
**अथ सम्माननं तेषां वस्त्रगन्धस्रगादिभिः ।।**

**६० । 'धूरसो'ति ततो धूपम्.......**

'धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः । देवानामसि बह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ।।'

(शुक्लयजुर्वेदः १।८)

( ६० । ) ·······तथाग्निर्ज्योतिरितृचचा ।

( ६० । ) दीपं निवेद्य हरये······

'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ।
अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ।
ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥'

(शुक्लयजुर्वेदः ३।९)

( ६० । ) ······निवेद्यानि निवेदयेत् ॥

६१ । क्षीरसारकृतान् काकान् गृध्रानपि सिताकृतान् ।
तिललड्डूनि लाजांश्च पायसं पानकानि च ॥

६२ । चतुर्विधानि चान्नानि रसैर्युक्तानि षड्विधैः ।
सम्पूर्णे भोजने वृत्ते दद्यादाचमनं हरेः ॥

६३ । ततो निवेद्य ताम्बूलं घनसारादि-संस्कृतम् ।
महानीराजनं कुर्या'दारात्री'ति तु मन्त्रतः ॥

६४ । सौवर्णे राजते कांस्ये स्थाले परमशोभने ।
कुङ्कुमेन लिखेत् पद्मं वसुपत्रं मनोहरम् ॥

६५ । तत्कर्णिकायां पिष्टेन दीपपात्रे विनिर्मिते ।
दीपमेकं विनिक्षिप्य वसुपत्रेऽष्टदीपकान् ॥

६६ । यव-गोधूम-दुग्धादि-रचितान् शर्करायुतान् ।
मूलमन्त्रेण चाभ्यर्च्य तत आरात्रिकं कृती ॥

६७ । स्थालकं तत् समुद्धृत्य मस्तकान्तं पुनः पुनः ।
नव वारान् भगवतस्ततो नीराजनं चरेत् ॥

६८ । 'द्यौः शान्ति'रिति मन्त्रेण विहिते शान्तिकर्मणि ।

'द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥'

(शुक्लयजुर्वेदः ३६।१७)

( ६८ । ) अभिषिच्यैव दूर्वाद्यैः 'समुद्रे'त्यादि मन्त्रतः ॥

'समुद्रज्येष्ठाः सलिलस्य मध्यात् पुनाना यन्त्यनिविशमानाः ।
इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु
या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः ।

समुद्रार्था याः शुचयः पावका—स्ता आपो देवीरिह मामवन्तु
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।
मधुश्चुतः शुचयो याः पावका—स्ता आपो देवीरिह मामवन्तु
यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति ।
वैश्वानरो यास्वग्निः प्रविष्ट—स्ता आपो देवीरिह मामवन्तु'

(ऋग्वेदः ७।४९।१-४)

**६९ । 'अद्धीदिन्द्रे'ति मन्त्रेण 'तमर्वन्त'मृचाथवा ।
ब्राह्मणैः प्रीतिमनसा आशीर्वचनमाचरेत् ॥**

'अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।
प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः'

( ऋग्वेदः १०।११६।८)

'तमर्वन्तं न सानसि———मरुषं न दिवः शिशुम् ।
मर्मृज्यन्ते दिवेदिवे
बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः ।
अच्छा न हूत उदरम्
उत त्या यजता हरी कुमारात साहदेव्यात् ।
प्रयता सद्य आ ददे
एष वां देवावश्विना कुमारः साहदेव्यः ।
दीर्घायुरस्तु सोमकः
तं युवं देवावश्विना कुमारं साहदेव्यम् ।
दीर्घायुषं कृणोतन'

( ऋग्वेदः ४।१५।६-१० )

**७० । ततः स्तुवीत गोविन्दं पौराणैर्वैदिकैरपि ।
सूक्तैर्मन्त्रै रहस्यैश्च स्तवैः स्तोत्रैश्च भक्तिमान् ॥**

**७१ । दिवसं गमयन्नेवं हरिप्रियजनैः सह ।
व्रतादि-पूर्वकं कुर्याद् भविष्योत्तरदृष्टितः ॥**

**७२ । निशीथे भगवज्जन्मन्यभिषेकादि-मङ्गलम् ।
गीतनृत्यादिभिश्चात्र विदध्याज्जागरोत्सवम् ॥**

**७३ । ततः प्रभाते निष्पाद्य व्रजेन्द्रोत्सवमुत्तमम् ।
भक्त्या महाप्रसादान्नं भुञ्जीत सह वैष्णवैः ॥**

**७४। लोकवद् गोकुलस्यापि व्यवहारादि-दर्शनात् ।**

'......जन्मर्क्षयोगे समवेतयोषिताम् ।
......चकार सूनोरभिषेचनं सती ॥'

(श्रीमद्भागवतम् १०।७।४)

'जन्मर्क्षं तेऽद्य भवतो विप्रेभ्यो देहि गाः शुचिः ॥'

(श्रीभा० १०।११।१८)

'गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकम् ।
रक्षाञ्चक्रुश्च शकृता द्वादशाङ्गेषु नामभिः ॥
गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् ।
न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥'

(श्रीभा० १०।६।२०-२१)

**(७४।) इत्यादि-दृष्ट्या दशमात् व्रजभावेन सेविना ॥**

**७५। एष जन्मतिथि-स्नानविधिः कृष्णस्य कीर्तितः ।
य एवं विधिना कुर्यात्तस्य सुष्ठु फलं शृणु ॥**

**७६। गोविन्दस्य प्रियो भूत्वा गाढप्रेमभराग्वितः ।
वृन्दावने सदा तस्य साक्षात्सेवां समाचरेत् ॥**

इति श्रीश्रील—रूपगोस्वामि—प्रभुपाद—विरचितः
श्रीश्रीकृष्णजन्मतिथिस्नानविधिः सम्पूर्णः ॥





## पुरुषसूक्तम्
### ( षोड़शोपचार–निर्णय )

उपचार १६ सोलह हैं । अवशिष्ट सब उपचार इन्हीं सोलहों के अन्तर्गत हैं—

**आवाहनासनापाद्यार्घाचमनीयस्नानाचमनवस्त्रयुगलाचमनोपवीताचमनगन्धपुष्पधूपदीपोपहाराचामनमुखवासस्तोत्रप्रणामदक्षिणाप्रदक्षिणाऽरार्तिकमंत्रन्त्रपुष्पांजलिक्षमाप्रार्थनान्तानि ।**

अर्घ्य के बाद जो आचमनीय उपचार है वह आचमनीय तो पृथक् उपचार ही है इसके अतिरिक्त अन्य सब आचमन उन २ उपचारोंके अङ्गभूत हैं। प्रणाम और प्रदक्षिणा स्तोत्र के ही अङ्गभूत हैं अथवा स्तोत्र, प्रदक्षिणा आरात्रिक तथा मंत्र पुष्पांजलि, क्षमा-प्रार्थना—ये सब प्रणाम (नमस्कार) के अङ्ग हैं। (वीरमित्रोदय) उपचारोंके विषयमें भी कईपक्ष प्रचलित हैं ।

'तस्माद्यज्ञात्सर्बहुतः संभृतं' मंत्र से ही स्नान, पञ्चामृतस्नान, गन्धजलस्नान, विशेष-स्नान-आदि करा देने चाहियें। पञ्चामृत स्नान 'पयः पृथिव्याम् आदि तत्तन्मत्रों से भी करा देने चाहियें। (वी० मि०)

दीपक दो होते हैं—एक तो उपचारदीपक तथा एक कर्मादि में तमःसंचारिभूतादि-निवारक (रक्षार्थ) अखण्ड या सखंडरक्षादीपक ।

सांग सुविभूषित मूर्ति के पक्षमें विष्णु का ध्यान इस तरह करे **यथा**—

**शंखचक्रगदापद्मपाणिं सजलजलदसुन्दरं संवीतपीताम्बरं, कमलदललिलतलोचनं लसत्किरीटकुण्डलकेयूरकंकणं, रत्नखचितक्षुद्रमुद्रान्वितकरांगुलीकंकटितटविलसद्रत्नमेखलं श्रीभगवन्तं ध्यायामि ।**

अब सरलता के लिये पुरुषसूक्त के प्रतिमंत्रान्त में अङ्गन्यास लिखते हुए उपचार भी लिखे देते हैं—

### अथ न्यासोपचार सहितं
### * माध्यन्दिनीयपुरुषसूक्तम् *

**हरिः ओ३म्—सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिठं० सर्व्वतःस्पृत्वाऽत्य-तिष्ठद्दशाँगुलम् ॥१॥ इति वामकरे,आवाहनं सम० । पुरुषऽएवेदठं० सर्व्वंयद्भू तंयच्चभाव्यम् ।**

उ तामृतत्वस्येशानोयदन्ने नातिरोहति ॥२॥ इति दक्षिणकरे, आसनं स० । एतावानस्य महिमातो ज्ज्यायाँश्च पूरुषः । पादोस्यव्विश्श्वाभूतानि त्रिपादस्यामृतन्दिवि ॥३॥ इतिवामपादे, पाद्यं । त्रिपादूर्ध्वऽउदैत्पुरुषःपादोऽस्येहाभवत्पुनः । ततोव्विष्वङ् व्यक्रामत्साशनानशनेऽअभि ॥४॥ दक्षिणपादे, अर्घ्यं सम० । ततोव्विराडजायतव्विराजोऽअधि पूरुषः । सजातोऽअत्यरिच्यत पश्चाद्भूमिमथोपुरः ॥५॥ वामजानौ, आचमनीयं । तस्माद्यज्ञात्सर्व्वहुतःसम्भृतंपृषदाज्ज्यम् । पशूँस्ताँश्चक्रे व्वायव्यानारण्याग्राम्याश्च ये ॥६॥ दक्षिणजानौ, स्नानम्, आचमनीयंस० । तस्माद्यज्ञात्सर्व्वहुतऽऋचःसामानि जज्ञिरे । छन्दाᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥ वामकट्यां,वस्त्रयुग्ममाचनीयंस० । तस्मादश्श्वाऽअजायन्त ये केचोभयादतः । गावो ह जज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥८॥ दक्षिणकट्यां, यज्ञोपवीतमाचमनम् । तंयज्ञंवर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्रतः । तेनदेवाऽअयजन्त साध्याऽऋषयश्च ये ॥९॥ नाभौ, चन्दनं सम० । यत्पुरुषंव्यदधुःकतिधाव्व्यकल्पयन् । मुखङ्किमस्यासीत्किंबाहूकिमूरूपादाऽउच्च्येते ॥१०॥ हृदये,पुष्पाणि स० । ब्राह्मणोऽस्स्यमुखमासीद्बाहूराजन्यः कृतः । ऊरूतदस्ययद्वैश्यःपद्भ्याᳬशूद्रोऽजायत ॥११॥ कण्ठे, धूपं स० । चन्द्रमामनसो जातश्चक्षोःसूर्य्योअजायत । श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥१२॥ वामबाहौ, दीपं सम० । नाभ्याऽआसीदन्तरिक्षᳬशीर्ष्णोद्यौः समवर्त्तत । पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथालोकाँ२ऽअकल्पयन् ॥१३॥ दक्षिणबाहौ, नैवेद्यं । यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥१४॥ मुखे, नमस्कारं सम० । सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः । देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषंपशुम् ॥१५ अक्ष्णोः दक्षिणां प्रदक्षिणां च सम० । यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् । तेह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥ शिरसि, मंत्र पु० प्रदक्षिणां च ततः पूजान्ते क्षमाप्रार्थना कुर्यात्, यस्य स्मृत्येत्यादिपद्यैः ।

इति न्यासपूजासहितं श्रीपुरुषसूक्तम् आचार्यपरमानन्दशास्त्रिमिश्रत्रिगुणायकसंगृहीतं समाप्तम् । **"यदि स्थिरप्रतिमा (मूर्त्ति) का मुख उत्तर को हो तो पूजन के समय पूजक किधर को मुख करे"—इसका निर्णय**

प्रतिमाः प्राङ्मुखोरुदङ्मुखो यजेतान्यत्रप्राङ्मुखः (गृ० प०) अब श्रीमित्रमिश्रा वीरमित्रोदये—अत्र प्रतिमाः प्राङ्मुखोरुदङ् मुखो यजेतेति यदुक्तं तत्स्थिरप्रतिमाविषयम् तथा तत्र दर्शनात्, अन्यत्रेति चलप्रतिमाविषयम् । अथवा 'देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत दादिपरिवाराणामंगावरणसंस्थितिः ॥१॥ (शौ० वि० पू० प्रकारोद्धृत वीरमित्रोदयीयं वचनम)

**आसीनः प्रागुदग्वार्चेदर्चायां त्वथ संमुखः (श्री० भा०) पूज्यपूजकयोर्मध्ये दिशं प्राचीं प्रकल्पयेत् । प्राच्येव प्राची सोद्दिष्टा मुक्त्वा वै देवपूजनम् ।**

इस सबका निष्कर्ष यह है कि—स्थिर प्रतिमाके पूजन में पूजक को देवता के संमुख ही अपना मुख करके पूजन के लिये बैठना चाहिये, उसमें यह विचार न करे कि देवता का मुख उत्तर को है तो मेरा मुख दक्षिण को हो जायगा क्योंकि वहाँ तो 'पूज्यपूजकयोर्मध्ये-प्राची' तथा-देवस्यमुखमारभ्य (वी० मि०) के प्रमाण से पूजक के सामने पूर्व ही है। यह सर्व संमत एक पक्ष है। दूसरा पक्ष यह है कि स्थिरप्रतिमा का मुख यदि पूर्वकी तरफ है तो पूजकको उत्तराभिमुख होकर पूजन करना चाहिये जैसा कि ऊपर (गृ० प०) के वाक्य में स्पष्ट है इस पक्ष में पूजक के पश्चिमाभिमुख होने की शंका भी नहीं रहती और यदि देवता का मुख दक्षिण की तरफ है तो पूजक को उदङ् मुख होकर बैठना 'उदङ्मुखः प्राङ्मुखो वा दैवं कर्म समारमेत्' के प्रमाण से प्रमाणित है ही। देवता के पश्चिमाभि-मुखत्व में तो पूजक का पूर्व को मुख होना युक्त ही है। इस पक्ष में उत्तराभिमुखदेवमूर्ति के होने पर पूजक को पूर्वाभिमुख होकर बैठने की "एकत्र निर्णीतः शास्त्रार्थोऽन्यत्रऽपि प्रयुज्यते" न्याय से 'उत्तराभिमुखीः प्रतिमाः प्राङ्मुखो यजेत' विधि तो स्वतः प्राप्त हो जाती है। इससे पूजक को दक्षिणाभिमुख होने की शङ्का भी नहीं रहती। चलप्रतिमा के विषय में निर्णय स्पष्ट ही है। किंतु इसमें "देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत्" आदि के अनुसार ही प्राची दिशा की कल्पना करके तदादि मानकर ही देवपूजन तथा अंगपूजा एवं आवरण पूजा करनी चाहिये।

आवरण सहित देव पूजा यदि करनी हो तो 'कृत्वाऽवरणपूजांतु धूपदीपौ निवेदयेत् (पु०अ०)के अनुसार ही उपचार समर्पण करे।

## मुद्राओं के विषय में निर्णय

मुद्राओं का लक्षण हम यहाँ अनावश्यक होने के कारण नहीं लिखरहे हैं। क्योंकि गृह्यपरिशिष्ट के प्रमाणानुसार धर्मसिंधुकारने मुद्राविधि को तांत्रिक मानते हुए अवैदिकता के कारण अनावश्यक माना है (ध० सिं० तृ० प० सं० प्र० व०)।

## प्रयोग

शौचादिनित्यक्रियाओं से निवृत्त होकर स्नानकर शुद्धवस्त्रयुगल धारणकर शुद्ध स्थान-पर शुभासन पर पूर्वाभिमुख होकर (स्थिर प्रतिमाके संमुख बैठकर) 'अपवित्रः पवित्र वा'

आदिसे अपने शरीरपर तथा संभृतसंभार पर जल छिड़ककर, तीन बार आचमनकर प्राणायाम कर गुरुगणेशजी को नमस्कार कर सूर्य भगवान को प्रणाम कर सङ्कल्प करे—

## * अथ श्रीसूक्तम् *

**क्षीरोदार्णवसम्भूते, कमले कमलालये।**
**धनं प्रयच्छ शोभाढ्ये ! त्वां विनास्ति न मे गतिः**

अर्थ—हे क्षीरसमुद्र से उत्पन्न होने वाली ! हे कमले ! कमलवासिनि ! हे शोभा-शालिनि ! आप मुझे धन दो, क्योंकि तुम्हारे बिना मुझे कोई सुख प्राप्त नहीं हो रहा है। अतएव सुख प्रदानार्थ हे लक्ष्मि ! आप मेरे गृह में वास करो।

## * श्रीसूक्तानुसार *

### ध्यान, एवं पूजनविधान

संकल्पः–देशकालौ संकीर्त्य अहं श्रीमहालक्ष्मीप्रीतये श्रीसूक्तस्य पाठं करिष्ये' इस तरह संकल्प करके भगवती श्रीमहालक्ष्मीजो का ध्यान नीचे के श्लोक से जैसे—

**या सा पद्मासनस्था विपुलकटितटीपद्मपत्रायताक्षी गम्भीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया। लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भै–र्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥१॥**

श्रीसूक्त की पन्द्रह ऋचाओं के 'इन्दिरा' आनन्द, कर्दम, और चिक्लीत ऋषि हैं। 'इन्दिरा' ॐ हिरण्यवर्णां मन्त्र की ऋषि हैं। तथा आनन्द, कर्दम और चिक्लीत ये तीनों शेष चौदह ऋचाओं के ऋषि हैं। ये तीनों इन्दिरा (लक्ष्मी) के पुत्र हैं।

### विनियोग :—

**ॐ हिरण्यवर्णामिति पञ्चदशर्चस्य श्रीसूक्तस्य श्री आनन्दकर्दमचिक्लीतेन्दिरासुता महर्षयः। श्रीरग्निर्देवता, आद्यास्तिस्रोऽनुष्टुभः चतुर्थी बृहती, पञ्चमीषष्ठ्यो त्रिष्टुभौ, ततोऽष्टावनुष्टुभः। अन्त्या प्रस्तारपंक्ति। हिरण्यवर्णामिति बीजम, तांम आवह जातवेद इति शक्तिः। कीर्तिमृद्धिं ददातु म इति कीलकम्, मम श्रीमहालक्ष्मीप्रसादसिद्धयर्थे न्यासे जपे (पाठे) च विनियोगः।**

इस विनियोग को बोलकर हाथ के जल को ताम्रपात्र में छोड़ दे, फिर 'ॐ श्रीमिति

बीजाभ्यां जलेन त्रिवारं करशुद्धि कुर्यात्' ॐ श्रीं इन दो बीजों से तीन बार जल से हाथ धो डाले।

मूर्धाक्षिकर्णनासामुखगलदोर्हृदयनाभिगुह्येषु।
पायूरुजानुजंघाचरणेषु न्यसेदृचः क्रमेण ॥ पूर्वमंगन्यासः (पृ० भा०)

हिरण्यवर्णामिति शिरसि। ॐ तामआवह जात वेद इति नेत्रयोः। अश्वपूर्वामिति कर्णयोः। कांसोस्मितामिति नासिकायाम्। चन्द्रां प्रभासामिति मुखे। आदित्यवर्णामिति कण्ठे। उपैतु मामिति बाह्वोः क्षुत्पिपासामिति हृदये। गन्धद्वारामिति नाभौ। मनसः काममिति गुह्ये। कर्दमेनेति पायौ (गुदे)। आपः स्रजन्त्वित्यूर्वोः। आर्द्रांपुष्करिणीं पुष्टि-मिति जान्वोः। आर्द्रां यस्करिणोमिति जंघयोः। तांम आवह जातवेद इति पादयोः।

## अथ करन्यासः (पृ० भा०)

ॐ नमो भगवत्यै महालक्ष्म्यै इति विशेषणं प्रतिन्यासं योजनीयम्। ॐ हिरण्यवर्णायै अंगुष्ठाभ्यां नमः। ॐ हरिण्यै तर्जनीभ्यां नमः। ॐ सुवर्णरजतस्रजायै मध्यमाभ्यां नमः। ॐ चन्द्रायै अनामिकाभ्यां नमः। ॐ हिरण्मय्यै कनिष्ठिकाभ्यां नमः। ॐ लक्ष्म्यै करतल-करपृष्ठाभ्यां नमः।

## हृदयादि षडंगन्यासः—(पृ० भा०)

ॐ हिरण्यवर्णायै हृदयाय नमः। ॐ हरिण्यै शिरसे स्वाहा। ॐ सुवर्णरजतस्रजायै शिखायैवषट्। ॐ चन्द्रायै कवचाय हुम्। ॐ हिरण्यमय्यै नेत्रत्रयाय वौषट्। ॐ लक्ष्म्यै अस्त्राय फट्। ("वक्षः शिरः शिखा बाहू नेत्रमस्त्राय फट् इति" क्रमः)

फिर 'भूर्भुवः स्वरोम्', यह बोलकर चुटकी से सब दिशाओं में दिग्बन्ध करे।

हिरण्मय्यै नमः हृदयाय नमः, ॐ चन्द्रायै नमः शिरसे स्वाहा, ॐ रजतस्रजायै नमः शिखायैवषट्, ॐ हिरण्यस्रजायै नमः कवचाय हुम्, ॐ हिरण्यायै नमः नेत्रत्रयाय वौषट् ॐ हिरण्यवर्णायै नमः अस्त्राय फट्, इत्यपि कुत्रचित्।

इस तरह क्रमसे न्यास करे। पुनः ध्यान करे।

अरुणकमलसंस्था, तद्रजः पुंजवर्णा, करकमलधृतेष्टाभीतियुग्माम्बुजाता।
मणिमुकुटविचित्राऽऽलंकृताऽऽकल्पजालैः, सकलभुवनमाता संततं श्रीः श्रियै नमः ॥

## अथ सोपचारं पूजनम्

'हिरण्यवर्णा०' से आवाहनम् ॥१॥ 'तां म आवह०' से आसनम् ॥२॥ 'अश्वपूर्वां०' से

पाद्यम्० ॥३॥ 'कांसोस्मितां' से अर्घम्० ॥४॥ 'चन्द्रां प्रभासां' से आचमनं पंचामृतम्०॥५॥ 'आदित्यवर्णे०' से शुद्धजलेन गंगोदकेन वा स्नानम् ॥६॥

इसके पश्चात् पञ्चोपचार से पूजन करे पुनः अभिषेक करे।

'उपैतु मां०' से वस्त्रयुगलम्० आच० ॥७॥ 'क्षुत् पिपासां०' से यज्ञोपवीतम् आच० सम० ॥८॥ 'गन्धद्वारां०' से चन्दनम्० ॥९॥ 'मनसः कामं०' पुष्पाणि स० ॥१०॥ 'कर्दमेन०' से धूपम् ॥११॥ 'आपःसृजन्तु०' से दीपम्० ॥१२॥ 'आर्द्रांपुष्करिणीं०' से नैवेद्यं स० ॥१३॥ 'आर्द्रांयस्करिणीं०' से फलं ताम्बूलं च ॥१४॥ 'तामऽआवह०' से दक्षिणां, नीराजनं, मन्त्रपुष्पाञ्जलिं च ॥१५॥ 'यः शुचिः०' से नमस्कारम् ॥१६॥

इसके पश्चात्—यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्। कहे और ॐ विष्णवे नमः ३ तीन बार कहे।

( अथ श्रीसूक्त का ससंपुटपुरश्चरणविधान )

श्रीसूक्त के पुरश्चरण में 'ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद २ श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।'

इस मन्त्र को सम्पुट में आदि और अन्त में कहे और जिस मन्त्र का सम्पुट करना हो उसके दो चरण आदि में और दो चरण अन्तमें कहे,—ऐसा ही रुद्रयामल में विधान है।

यथा—दुर्गे स्मृता हरसि भीतिमशेषजन्तोः।
स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
दारिद्र्यदुःखभयहारिणि कात्वदन्या।
सर्वोपकारकरणाय सदार्द्रचित्ता॥"

इस मन्त्र का सम्पुट लगा कर पुरश्चरण करना है तो निम्न प्रकार से होगा—

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद २ श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः। ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।

ॐ हिरण्यवर्णां हरिणीं सुवर्ण रजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदोममावह। दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्र चित्ता॥

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः॥
इस प्रकार का विधान है।

इति श्रीसूक्तस्य न्यासध्यानपूजनादिकम् आचार्य परमानन्दशास्त्रिमिश्रत्रिगुणायकेन संगृहीतं सम्पूर्णम्।

## ※ अथ श्रीसूक्तस्य ※

श्रीविद्यारण्यकृतभाष्यानुसारी—

※ सरलहिन्दीभाषार्थः ※

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥

हे जातवेदः (हे अग्ने !) तुम स्वर्ण के समान कांतिवाली तथा कुछ हरितवर्ण वाली, कोई कोई हरिणी का मृगी भी अर्थ करते हैं, जैसा कि पुराणमें लिखा है कि—'श्रीर्धृत्वा-हरिणीरूपमरण्ये सञ्चचार ह' अर्थात लक्ष्मीजी ने हरिणी रूप धारण कर वन में भ्रमण किया था, तथा सोने एवं चाँदी के पुष्पों की माला धारण करने वाली, चन्द्रमा की भांति प्रकाश युक्त, हिरण्य के से रूप वाली लक्ष्मी को मेरे लिए बुलाओ ॥१॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

हे जातवेद (अग्निदेव) तुम उस लक्ष्मी को मेरे लिए बुलाओ जिसके कि आने पर मैं स्वर्ण, गौ, अश्व (घोड़े) एवं पुत्र पौत्रादि नौकर चाकर प्राप्त करसकूं और वह अनपगामिनी अर्थात् मुझे कभी न छोड़े वह मेरे घरमें स्थिर होकर रहे ॥२॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मादेवी जुषताम् ॥३॥

मैं ऐसी लक्ष्मी देवी का अपने पास आने के लिये आवाहन करता हूं जिसके कि आगे घोड़े चलते रहें तथा रथ जिसके मध्य में हों एवं सुन्दर हाथियों के नादों को जतलाने वाली हो ऐसी वह आश्रय करने योग्य सेनारूप आवाहित की हुई लक्ष्मीदेवी मुझ पर प्रसन्न हो ॥३॥

कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां, तामिहोपह्वये श्रियम् ॥४॥

जो वाणी और मनके अगोचर या ब्रह्मरूप है तथा मंद २ हास्य करने वाली एवं स्वर्ण के आकार वाली, दयार्द्र हृदय वाली, प्रशस्त प्रकाशवाली और जो स्वयं तृप्त है तथा समस्त मनोरथों से भक्तोंको तृप्त करदेने वाली है ऐसी विश्व विख्यात पद्म (कमल) में वास करने वाली एवं कमल सदृश वर्ण वाली लक्ष्मी का मैं यहाँ आवाहन करता हूं अपने घर बुलाता हूं ॥४॥

**चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।**
**तां पद्मिनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मेनश्यतां त्वां वृणोमि ॥५॥**

मैं चन्द्रमाके समान प्रकाश करने वाली, प्रकृष्टकांति वाली, कीर्तिसे प्रकाशमान, स्वर्ग में देवताओं से भी सेविव, अत्यन्त उदार हृदय वाली, कमल के से आकार वाली लक्ष्मीकी इस लोक में शरण प्राप्त करता हूं जिससे कि मेरी दरिद्रता दूर हो, अतः तुझ लक्ष्मी का मैं वरण करता हूं ॥५॥

**आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ विल्वः ।**
**तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥६॥**

हे सूर्य के समान कांतिवाली ! तुम्हारे तप से वनस्पति विल्ववृक्ष की उत्पत्ति हुई है अतएव उस विल्ववृक्ष के फल तुम्हारी कृपा से मेरे आँतरिक अज्ञान और उसके कार्य एव बाहिरी अलक्ष्मी (दरिद्रता) को नष्ट करें ॥६॥

**उपैतु मां देवसखः कीर्तिश्च मणिना सह ।**
**प्रादुर्भूतोऽस्मिराष्ट्रेऽस्मिन्कीर्ति मृद्धिददातु मे ॥७॥**

हे लक्ष्मिमातः ! महादेवजी के सखा कुबेर तथा कीर्त्ति दक्षप्रजापति की कन्या (कीर्त्यभिमानिनी देवता) ये दोनों मुझे मणिभद्र (कोशाध्यक्ष) (मणि चिंतामणि) के साथ प्राप्त हों अर्थात् मुझे धन और यश दोनों मिलें, क्योंकि मैं इसी राष्ट्र (भारतवर्ष) में उत्पन्न हुआ हूं अतएव मुझे वे कुबेरजी कीर्त्ति और ऋद्धि अवश्य प्रदान करें ॥७॥

**क्षुत्पिपासामलांज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।**
**अभूतिमसमृद्धिञ्च सर्वां निर्णुद मे गृहात् ॥८॥**

हे मातः ! भूख और प्यास के कारण मलिनता को धारण करने वाली आपकी जेठी बहन अलक्ष्मी (दरिद्रता) का मैं नाश चाहता हूं अतएव हे देवि ! मेरे घर से असमृद्धि और अभूति (अनैश्वर्य) को शीघ्र दूर कर दो ॥८॥

**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**
**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥**

जो गन्धलक्षण वाली अर्थात् पृथ्वीरूप (पृ० भा०) किसी के भी वश में न रहने वाली, नित्यपुष्ट (धनधान्यादि से समृद्ध) शुष्क गोमयवती अर्थात् बहुत से घोड़े और गौ आदि पशुओं से भरी हुई, समस्त प्राणियों की ईश्वरी या आधार भूत ऐसी उस भगवती भूरूप लक्ष्मी को मैं आवाहित करता हूं अर्थात् अपने यहाँ बुलाता हूं ॥९॥

**मनसः काममाकूतिं वाचः सत्यमशीमहि ।**
**पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥**

हे लक्ष्मिदेवि ! मानसिक सङ्कल्प, वाणी को सत्यता, पशुओं गोमहिष्यादिकोंके रूप (दुग्ध, दधि नवनीत) आदिकी अधिकता को एवं अन्नादिकों यव व्रीहिधान, गोधूम चणक (आदि) के रूपों (भक्ष्य,भोज्य,चोष्य,लेह्य) को प्राप्त करूँ। श्री (लक्ष्मी) और यश (कीर्त्ति) मुझ में अर्थात मेरे घर में वास करें, मैं धनवान् एवं कीर्तिमान् हो जाऊँ ॥१०॥

**कर्दमेन प्रजा भूता मयि सम्भव कर्दम ।**
**श्रियं वासय मे कुले मातरं पद्मालिनीम् ॥११॥**

कर्दम नाम के ऋषि पुत्र से श्रीलक्ष्मीजी सन्तानवती हैं, अतः हे कर्दम श्रीपुत्र ! तुम मेरे घर में अवश्य रहो । हे कर्दम ! तुम मेरे कुल में कमल की मालाओं को पहिने हुई अपनी माता लक्ष्मी को वसाओ ॥११॥

**आपःसृजन्तु स्निग्धानिचिक्लीत वस मे गृहे ।**
**चिक्लीत देवीं मातरं श्रियं वासय मे कुले ॥१२॥**

जल चिकने पदार्थों को या स्नेह युक्त कार्यों को उत्पन्न करे। हे चिक्लीत ! लक्ष्मी पुत्र ! आप मेरे घरमें निवास करो तथा माता लक्ष्मी देवी को भी मेरे घर में बसाओ ॥१२

**आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम् ।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदोम आवह ॥१३॥**

हे अग्निदेव ! आर्द्रगन्ध वाली तथा अभिषेक के लिये उद्युक्त हाथियों के शुण्डाग्र भागों वाली या कमलों से युक्त या पद्मलतारूप पुष्टिस्वरूपवाली,पीतवर्ण वाली एवं कमल-मालाविभूषिता, चन्द्रमा के समान प्रकाश करने वाली, स्वर्णरूप लक्ष्मी को मेरे घर में आवाहन करो ॥१३॥

**आर्द्रां यस्करिणीं यष्टिं, सुवर्णां हेममालिनीम् ।**
**सूर्यां हिरण्मयीं लक्ष्मीं, जातवेदो म आवह ॥१४॥**

हे जातवेद ! अग्ने ! दया से आर्द्रचित्त वाली या आर्द्रगन्ध वाली तथा दुष्टों को दण्ड देने वाली यष्टि स्वरूपा (धर्म दण्डस्वरूपा) सुन्दर कांति वाली एवं सुवर्ण कमलों की माला धारण करने वाली, सूर्य की भाँति प्रकाशित होने वाली स्वर्णके समान आभा वाली या सुवर्णरूप लक्ष्मी को मेरे घर में बुलाओ और बसाओ ॥१४॥

**तां मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् ।**
**यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ।।१५।।**

हे अग्निदेव ! मेरे घर में उस लक्ष्मी को बुलाओ जो अनपगामिनी हो अर्थात् मुझे कभी न छोड़े, जिस लक्ष्मी के आने पर मैं सोना, उत्तम यश और दास दासियों, घोड़े, नौकर-चाकर एवं पुत्रों तथा पौत्रों को भी प्राप्त करूँ अर्थात् ऐसी लक्ष्मी मेरे गृहमें निरन्तर रूप से रहे ।।१५।।

**यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।**
**सूक्तं पञ्चदशर्चंञ्च श्रीकामः सततं जपेत् ।।१६।।**

जो मनुष्य लक्ष्मी की प्राप्ति की इच्छा रखता हो वह पवित्र और सावधान चित्तसे प्रतिदिन अग्नि में गो-घृत से हवन करे और उसके साथ ही साथ लक्ष्मी सूक्त की पन्द्रहों ऋचाओं का जप करे ऐसा करने से अवश्य ही लक्ष्मी की प्राप्ति होती है ।

विशेष:—इस श्री सूक्त के अनुष्ठान में अग्निदेव को सम्मुख प्रज्वलित करके श्रीसूक्त की १५ ऋचाओंसे प्रत्येकके अन्त में 'स्वाहा' पद उच्चारण करके अग्नि में केवल घी का हवन करे तथा उस प्रज्वलित अग्निके ही सम्मुख होकर अञ्जलि बांधकर पन्द्रहों ऋचाओं का निरन्तर पाठ करता रहे,इस तरह करने से शीघ्र फल प्राप्ति होती है । इस सूक्त की १५ आवृत्ति करके प्रतिदिन हवन करने से शीघ्र ही फलप्राप्त होता है इसमें सन्देह नहीं ।

ऐसे स्वल्प हवन के लिये लोहे का या नवीन मृन्मय चल कुण्ड भी प्रशस्त माना गया है । उसमें प्रतिदिन हवन करता रहे । इसके लिए शास्त्रोक्त प्रमाण है ।।१६।।

**स्वल्पो होमो वेदिकायां लोहपात्रेऽथवा भवेत् ।**
**मृन्मये वा हस्तकृते कैश्चिदेवं समीरितं (कु. कौ. ८८)**
**नैमित्तिके च नित्ये वेदीचाप्यायसं पात्रम् ।**
**नूतनमृन्मयपात्रं कैश्चिदभिहितं प्रशस्तम् (कु. त. प्र.)**
**एकमेखलकं वापि कुण्डं संक्षेपकर्मणि ।**
**कुर्याच्चलं स्थिरं वापि नहि कुण्डं बिना शुभम् । (कु. ना. पं. रा. ३०)**

इत्याचार्यपरमानन्दशास्त्रिमिश्रकृतभाषाटीकाविभूषितं श्रीसूक्तं समाप्तम् ।

——:०:**:०:—

* अथ हिन्दीभाषाभाष्यसमन्वितम् *

## * श्रीलक्ष्मीसूक्तम् *

### विधान—

**कृतनित्योचितक्रियोऽनुष्ठानकर्ताउदङ्मुखःप्राङ्मुखो वा उपविश्य 'अपवित्रः पवित्रो वा सर्वाऽवस्थांगतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स वाह्याऽभ्यन्तरः शुचिः। इति मन्त्रेणात्मनं पूजासामग्रीं च संप्रोक्ष्य वारत्रयमाचम्य निर्विघ्नकार्यसिद्ध्यर्थं गणेशादीन् संस्तूय संकलपयेत्।**

नित्यनैमित्तिक कार्यों से निवृत्त होकर अनुष्ठान कर्ता उत्तराभिमुख या पूर्वाभिमुख हो 'अपवित्रः पवित्रो वा' इस मंत्र से अपने ऊपर तथा सामग्री पर जल प्रोक्षण करके तीन बार आचमन कर निर्विघ्नकार्यसमाप्त्यर्थं गणेशादि देवों का ध्यान कर संकल्प करे।

### संकल्प :—

**हरिः ॐ विष्णुर्विष्णुर्विष्णुर्नमः परमात्मने श्रीश्वेतवाराहकल्पे जम्बूद्वीपे भरतखण्डे आर्यावर्तान्तिर्गतब्रह्मावर्तैकदेशे बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रोत्पन्नोऽमुकनामाहमद्य भगवत्याः श्रीलक्ष्मीदेव्याः प्रसादसिद्ध्यर्थे विपुलधनप्राप्त्यर्थे च लक्ष्मीसूक्तस्य पाठमहं करिष्ये॥**

इसके पश्चात् जो विधि श्रीसूक्त में लिखी है उसी विधि के अनुसार भगवती लक्ष्मी का पूजन कर इस लक्ष्मी सूक्त का सविधि पाठ करे।

### ध्यानम्—

**सौवर्णपद्मसद्माऽमलकमलकृतं युग्मशःपाणियुग्मे, बिभ्रन्ती शोभयोद्ग्राहितजलधिजलोच्छन्नगात्रो विधात्री। बाहुद्वन्द्वकराभयाऽर्द्रहृदयाभक्तप्रियोल्लासिनी, लक्ष्मीर्मे भवनेवसत्वनुदिनंचन्द्राहिरण्मय्यपि॥१॥**

**सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्ध माल्यशोभे। भगवति हरिवल्लभे मनोज्ञे-त्रिभुवन भूतिकरि प्रसीम मह्यम्॥१॥**

हे कमल वासिनि! कमल सदृश कोमल हाथों वाली! स्वच्छ स्वच्छ सुगन्धित पुष्पों की माला को धारण करने से शोभा वाली! हे विष्णुप्रिये! मन की बातों को जानने वाली! त्रिभुवन (त्रैलोक्य) को ऐश्वर्य तथा धन देने वाली हे देवि! मेरे ऊपर प्रसन्न हो जाओ॥१॥

**धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसु: ।**
**धनमिन्द्रो वृहस्पतिर्वरुणो धनमश्विनौ ।।२।।**

अग्निदेव धन दें ! वायुदेव धन दें ! सूर्यदेव धन दें ! इसी भाँति वसु, इन्द्र, वृहस्पति, वरुण एवं अश्विनीकुमार आदि समस्त देव हमारे गृहमें वास करते हुए हमें धन प्रदान करें ।

**वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।**
**सोमं धनस्य सोमिनो, मह्यं ददातु सोमिनः ।।३।।**

हे गरुड़ देव ! आप सोम रस पीजिये । इन्द्रदेव भी सोमरस पीवें । सोमी (सोम रस पीने वाले) कुवेर आदिक समस्त देव मेरे लिये भी सोम रस दें और सोम रस के पीने वाले सर्वदा हमारे घर में निवास करें । जिससे कि मैं भी ऐश्वर्यशाली बन जाऊँ ।।३।।

**न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।**
**भवंति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ।।४।।**

जो इस श्रीसूक्त का पाठ करते हैं उन भक्तों को एवं जिन्होंने पुण्य किये हैं ऐसे लोगों को केवल पाठ मात्र से क्रोध, मत्सरता, लोभ एवं अशुभ मति आदि नहीं सताते हैं ।।४।।

**पद्मानेन पद्म ऊरू पद्माक्षि पद्मसम्भवे ।**
**तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम् ।।५।।**

हे कमल के सदृश मुख वाली ! हे कमल के समान जंघों वाली ! हे कमल नयने ! हे कमल में वास करने वाली ! हे पद्माक्षि ! तुम मेरे यहाँ सदैव वास करो, जिससे कि मैं सुख एवं ऐश्वर्य प्राप्त करूँ ।।५।।

**विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।**
**विष्णुप्रियां सखीं देवीं नमाम्यच्युतवल्लभाम् ।।६।।**

विष्णु-पत्नि क्षमा स्वरूपिणी, माधवी, विष्णु प्रिया, माधव प्रिया, सखी, देवी एवं अच्युत अर्थात् सच्चिदानंद परमेश्वर की वल्लभा को मैं प्रणाम करता हूं ।।६।।

**महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि ।**
**तन्नो लक्ष्मीः प्रचोदयात् ।।७।।**

हम महालक्ष्मीजी की जिज्ञासा करते हैं और विष्णु-पत्नि का ध्यान करते हैं अतएव श्री महालक्ष्मीजी हमें प्रेरित करें अर्थात् हमारे गृह में निरंतर निवास करें ॥७॥

**पद्माननेपद्मिनिपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि।**
**विश्वप्रियेविश्वमनोऽनुकूलेत्वत्पादपद्मं मयिसन्निधत्स्व ॥८॥**

हे कमल मुखि ! हे कमल वाली ! हे कमलके पत्रों वाली ! हे कमलों से प्रेम करने वाली, हे कमल के समान बड़ी बड़ी आँखों वाली, संसार की प्रिय, संसार के मन के अनुकूल चलने वाली, हे महालक्ष्मि ! तुम अपने चरण कमलों को मेरे घरमें रखो ॥८॥

**आनन्दः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः।**
**ऋषयः श्रियः पुत्राश्च मयि श्रीर्देविदेवताः ॥९॥**

आनन्द, कर्दम, श्रीद, चिक्लीत ये चार जो प्रसिद्ध पुत्र हैं जो कि इस श्रीसूक्त के ऋषि भी हैं और इस सूक्त की प्रधान देवतालक्ष्मीजी के पुत्र ही हैं मुझे श्री दें ॥९॥

**ऋणरोगादि दारिद्रयं पापञ्च अपमृत्यवः।**
**भय शोकमनस्तापा नश्यन्तु मम सर्वदा ॥१०॥**

हे महालक्ष्मि ! मेरी ऋण रोगादि बाधायें, दारिद्रय, पाप, अपमृत्यु (अकाल मृत्यु) भय शोक एवं समस्त मानसिक ताप आदि सदा के लिये नष्ट हों जिससे कि मैं सर्वदा सुख भोगूं ॥१०॥

**श्रीर्वर्चःस्वमायुष्यमारोग्यंमाविधात्पवमानं महीयते।**
**धान्यंधनंपशु बहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥११॥**

इस सूक्त का पाठ करने से लक्ष्मी, तेजस्विता, आयु,आरोग्य, आदि सभी तथा पवित्रता एवं गौरव वस्तुएं वृद्धि को प्राप्त होती हैं और धन, धान्य, पशु, बहुपुत्रलाभ, सौ वर्षों तककी आयु इसके जप मात्रसे ही प्राप्त होती हैं ॥११॥

इत्याचार्यपरमानंदशास्त्रिकृतभाषाटीकाविभूषितं श्रीलक्ष्मीसूक्तं समाप्तम् ॥

## देव-पूजन

पूर्वाभिमुख बैठकर बायीं ओर घण्टा, धूप तथा दाहिनी ओर शंख, जल पात्र तथा पूजन की सामग्री रखकर आचमन, प्राणायाम करके संकल्पवाक्य के अन्तमें **"शालग्राम-पूजनं तदङ्गत्वेन गणपत्यादिदेवानाम्मण्डले स्थापनं पूजनञ्च करिष्ये"** कहकर जलादि छोड़े।

## दीपक-पूजन

घृतका दीपक अपनी बाईं तथा तैलका दाहिनी ओर पूर्व या उत्तरमुख करके चावल आदिपर रख प्रज्वलित कर हाथ धो नीचे लिखी प्रार्थना करें।

**भो दीप ! देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत्।**
**यावत्कर्मसमाप्तिः स्यात् तावत्त्वं सुस्थिरो भव ॥**

## घंटा-पूजन

आवाहनके लिये घण्टा बजा पश्चात् घण्टा का पूजन करें।

**आगमार्थन्तु देवानां गमनार्थन्तु रक्षसाम्।**
**घण्टा-नादं प्रकुर्वीत पश्चात् घण्टां प्रपूजयेत् ॥**

## शङ्ख-पूजन

शङ्ख में जल भरकर शंख-मुद्रा दिखा पूजा कर नीचे लिखी प्रार्थना करें।

**त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे।**
**निर्मितः सर्वदेवैश्च पाञ्चजन्य ! नमोऽस्तु ते ॥**

## स्वस्तिवाचन

**श्रीमन्महागणाधिपतये नमः ।१। लक्ष्मीनारायणाभ्यां नमः ।२। उमामहेश्वराभ्यां नमः ।३। वाणीहिरण्यगर्भाभ्यां नमः ।४। शचीपुरन्दराभ्यां नमः।५। मातापितृचरणकमलेभ्यो नमः ।६। इष्टदेवताभ्यो नमः ।७। कुलदेवताभ्यो नमः ।८। ग्रामदेवताभ्यो नमः ।९। वास्तु-देवताभ्यो नमः ।१०। स्थानदेवताभ्यो नमः ।११। एतत्कर्मप्रधानदेवताभ्यो नमः ।१२। सर्वेभ्यो देवेभ्यो नमः ।१३। सर्वेभ्यो ब्राह्मणेभ्यो नमः ।१४। अविघ्नमस्तु ।१५। ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्व-वेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पति-र्दधातु ।१६। ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः। पयस्वतीः प्रदिशः सन्तु मह्यम् ।१७। ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णो-र्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ।१८। ॐ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा**

देवता वसवो देवता रुद्रा देवता ऽऽदित्या देवता मरुतो देवता विश्वेदेव देवता बृहस्पति-र्देवतेन्द्रो देवता वरुणो देवता ।१९। ॐ द्यौः शान्तिरन्तरिक्ष शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्ति र्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वशान्तिः शान्ति-रेव शान्तिः सामा शान्तिरेधि ।२०। ॐ पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः। अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ।२१। ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ।२२। ॐ शतमिन्नु शरदो अन्तिदेवा यत्रा नश्चक्रा जरसन्तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानोमध्या रीरिषतायुर्गन्तोः । ॐ अदितिर्द्यौरदितिरंतरिक्षमदितिर्माता स पिता स पुत्रः । विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् । ॐ यतो यतः समीहसे ततो नो अभयं कुरु । शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः ।२५। ॐ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ।२६। ॐ एतन्ते देव सवितर्यज्ञम्प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव । ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञ-मिमं तनोत्वरिष्टं यज्ञ समिमं दधातु । विश्वेदेवास इह मादयन्तामो ३ म् प्रतिष्ठ ।२८। एष वै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितम्भवति ।२९। ॐ गणानां त्वां गणपति हवामहे प्रियाणां त्वा प्रियपति हवामहे निधीनां त्वा निधिपति हमामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ।३०। ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ।३१। सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बो-दरश्च विकटो विघ्ननाशो विनायकः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ।३२।

## पुण्याहवाचन

### तत्रादौ युग्मब्राह्मणानां हस्तेषु ।

(यजमानः) "शिवा आपः सन्तु" (ब्राह्मणाः) "सन्तु शिवा आपः ।" इति जलम् । (यजमानः) "सुगन्धाः पान्तु ।" (ब्राह्मणाः) "सौमंगल्यं चास्तु ।" इति गन्धं । (यजमानः) "सौमनस्य मस्तु ।" (ब्रा०) "अस्तु सौमनस्यम् ।" इति पुष्पम् । (यज०) "अक्षतं चारिष्टं चास्तु ।" (ब्रा०) "अस्त्वक्षत मरिष्टं च ।" इत्यक्षतान् । (यज०) "सफल ताम्बूलानि पान्तु ।" (ब्रा०) "ऐश्वर्य मस्तु ।" इति सफलताम्बूलम् (यज०) "दक्षिणाः पान्तु ।" (ब्रा०) बहुदेयं चास्तु।"

इति दक्षिणा। (यज०) "ॐ स्वर्चित मस्तु।" (ब्रा०) "अस्त्वर्चितं मंगलं च।" इति जलम्। दीर्घायुः शान्तिः पुष्टिस्तुष्टिः श्रीयशो विद्या विनयो बहुपुत्रं बहुधनं चास्तु। यं कृत्वा सर्ववेदयज्ञक्रियारंभाः शोभनाः प्रवर्तन्ते तमहमोंकारमादिं कृत्वा ऋग्यजुः सामाथर्वणाशीर्वचनं बह्वृषिसमनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये। वाच्यता। मिति ब्राह्मणवचनम्। पुनः यजमानो ब्रूयात्। व्रतनियमतपस्स्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् (ब्राह्मणाः) समाहितमनसः स्मः। (यजमानो ब्रूयात्) प्रसीदन्तु भवन्तः (ब्राह्मणाः) प्रसन्नाः स्म। ततो यजमानः। अवनीकृतजानुमण्डलः कमलमुकुलसदृशमजलिं शिरस्याधाय दक्षिणेन पाणिना जलपूर्णं (सुवर्णं) कलशं धारयित्वा भूमौ स्थापिते पात्रद्वये प्रथमपात्रे किंचिदुदकं पातयेत्। तत्र ब्राह्मणा वदेयुः ॐ शान्तिरस्तु। पुष्टिरस्तु। वृद्धिरस्तु। ऋद्धिरस्तु। अविघ्नमस्तु। आयुष्यमस्तु। आरोग्यमस्तु। शिवमस्तु। शिवं कर्मास्तु। कर्मसमृद्धिरस्तु। पुत्रसमृद्धिरस्तु। वेदसमृद्धिरस्तु। शास्त्रसमृद्धिरस्तु। धनधान्यसमृद्धिरस्तु। इष्टसंपदस्तु। अरिष्टनिरसनमस्तु यच्छ्रेयस्तदस्तु। ततः द्वितीयपात्रे पातयेत। यत्पापमकल्याणं तद्दूरे प्रतिहतमस्तु। पुनः प्रथमपात्रे पातयेत्। उत्तरोत्तरे कर्मण्यविघ्नमस्तु। उत्तरोत्तरमहरहरभिवृद्धिरस्तु। उत्तरोत्तराः क्रिया शुभाः शोभनाः संपद्यन्ताम्। तिथिकरण मुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम्। तिथिकरणे सुमुहूर्ते सुनक्षत्रे सुग्रहे सुदेवते प्रीयेताम्। अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम्। इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम्। माहेश्वरीपुरोगा मातरः प्रीयन्ताम्। वशिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम्। अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम्। ब्रह्मपुरोगाः सर्ववेदाः प्रीयन्ताम्। विष्णुपुरोगाः सर्वदेवाः प्रीयन्ताम्। ऋषयश्छन्दांस्याचार्या वेदा देवा यज्ञाश्च प्रीयन्ताम्। ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्। अम्बिकासरस्वत्यौ प्रीयेताम्। श्रद्धामेधे प्रीयेताम्। दुर्गापांचाल्यौ प्रीयेताम्। भगवती कात्यायनी प्रीयताम्। भगवती माहेश्वरी प्रीयताम्। भगवती ऋद्धिकरी प्रीयताम्। भगवती वृद्धिकरी प्रीयताम्। भगवती पुष्टिकरी प्रीयताम्। भगवती तुष्टिकरी प्रीयताम्। भगवन्तौ विघ्नविनायकौ प्रीयेताम्। सर्वाः कुलदेवताः प्रीयन्ताम्। पुनः द्वितीयपात्रे पातयेत्। हताश्च ब्रह्मद्विषः। हताश्च परिपन्थिनः। हताश्च विघ्नकर्तारः। शत्रवः पराभवं यान्तु। शाम्यंतु घोराणि शाम्यन्तु पापानि। शाम्यन्त्वीतयः। पुनः प्रथमपात्रे पातयेत्। शुभानि वर्द्धन्ताम्। शिवा आपः सन्तु। शिवा ऋतवः सन्तु। शिवा अग्नयः सन्तु। शिवा आहुतयः सन्तु। शिवा वनस्पतयः सन्तु। शिवा अतिथयः सन्तु। अहोरात्रे शिवे स्याताम्। निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न आषधयः पच्यन्ताम्। योगक्षेमोः न कल्पताम्। शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमादित्यरूपाः सर्वे ग्रहाः प्रीयन्ताम्। भगवान्नारायणः प्रीयताम्। भगवान्पर्जन्यः प्रीयताम्। भगवान् स्वामी

**महासेनः प्रीयताम् । पुरोनुवाक्यया यत्पुण्यं तदस्तु । याज्यया यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यं तदस्तु । प्रातः सूर्योदये यत्पुण्यं तदस्तु ।**

ततो यजमानः सुवर्णकलशं भूमौ निधाय प्रथमपात्रपातितजलेन शिरःसंमृज्य सपरिवारगृहांश्चाभिषेचयेत् । द्वितीयपात्रजलमेकान्ते पातयेत् ।

(यजमानो ब्रूयात्) । **ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादन कारकम् । वेदवृक्षोद्भवं पुण्यं तत्पुण्याहं ब्रुवन्तु नः ।** भो ब्राह्मणाः ! मम सपरिवारस्य गृहे पुण्याहं भवन्तो ब्रुवन्तु (ब्राह्मणाः) **ॐ पुण्याहम् ३ ॥ ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥** (यजमानः) **पृथिव्यामुद्धृतायान्तु यत् कल्याणं पुराकृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ।** भो ब्राह्मणाः ! मम सपरिवारस्य गृहे कल्याणं भवन्तो ब्रुवन्तु । (ब्राह्मणाः) **ॐ कल्याणम् ३॥ यथेमां वाचं कल्याणी मावदानी जनेभ्यः ब्रह्म राजन्याभ्या शूद्राय चार्य्याय च स्वाय चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुपमादो नमतु ॥** (यजमानः) **सागरस्य च या लक्ष्मीर्महालक्ष्म्यादिभिः कृता । संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ।** भो ब्राह्मणाः । मम सपरिवारस्य गृहे ऋद्धिं भवन्तो ब्रुवन्तु । (ब्राह्मणाः) **ॐ ऋद्ध्यताम् ३ ॥ ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम । दिवं पृथिव्या अद्ध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥** (यजमानः) **स्वस्त्यस्तु ह्यविनाशाख्या नित्यं मंगलदायिनी । विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवन्तु नः ॥** भो ब्राह्मणाः ! मम सपरिवारस्य गृहे स्वस्ति भवन्तो ब्रुवन्तु ॥ (ब्राह्मणाः) **ॐ स्वस्ति ३॥ ॐ स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो वृहस्पतिर्दधातु ॥** (यजमानः) **समुद्रमथनाज्जाता जगदानन्दकारिका हरिप्रिया च मांगल्या तां श्रियं च ब्रुवन्तु नः ॥** भो ब्राह्मणाः ! मम सपरिवारस्य गृहे श्रीरस्त्विति भवन्तो ब्रुवन्तु (ब्राह्मणाः) **ॐ अस्तु श्रीः ३ ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्म ईषाण सर्वलोकम्म ईषाण ।** (ततस्तिलकाशीर्वादः अथ दक्षिणादानम्) ॥ **ॐ अद्य पुण्याहवाचनसांगतासिद्ध्यर्थं पुण्याहवाचकेभ्यो नाना-नामगोत्रेभ्यो ब्राह्मणेभ्य इमां यथाशक्ति हिरण्यमूल्यद्रव्य-दक्षिणां संप्रददे ॥** इति पुण्याहवाचनम् ॥

**अङ्गन्यास**—पूरे मन्त्र शालग्रामपूजन में लिखे हैं ।

**ॐ सहस्रशीर्षा०**—वामकरे । **ॐ पुरुष एवेद सर्वं०**—दक्षिणकरे । **ॐ एतावानस्य महिमा०**—वामपादे । **ॐ त्रिपा दूर्ध्वं०**—दक्षिणपादे । **ॐ ततो विराड०**—वामजानुनि । **ॐ तस्माद्यज्ञात्सर्वहुत०**—दक्षिणजानुनि । **ॐ तस्माद्यज्ञात्सर्वहुत ऋचः०**—वामकट्याम् ।

ॐ **तस्मादश्वा॰**–दक्षिणकटचाम् । ॐ **तं यज्ञम्॰**–नाभौ । ॐ **यत्पुरुषं व्यदधुः॰**–हृदि । ॐ **ब्राह्मणोस्य॰**–कण्ठे । ॐ **चन्द्रमा मनसो॰**–वामबाहौ । ॐ **नाभ्या आसी॰**–दक्षिणबाहौ । ॐ **यत्पुरुषेण॰**–मुखे । ॐ **सप्तास्या॰**–अक्ष्णोः । ॐ **यज्ञेन यज्ञ॰**–मूर्ध्नि ।

**पञ्चाङ्गन्यास—**

ॐ **अद्भ्यः सम्भृतः॰**–हृदये । ॐ **वेदाहमेतम्॰**–शिरसि । ॐ **प्रजापतिश्च॰** शिखायाम् । ॐ **यो देवेभ्य आतपति॰** कवचाय हुम् । ॐ **रुचं ब्राह्मम्॰** अस्त्राय फट् ।

**करन्यास—**

ॐ **ब्राह्मणोस्य॰**–अंगुष्ठाभ्यां नमः । ॐ **चन्द्रमा॰**–तर्जनीभ्यां नमः । ॐ **नाभ्या॰**–मध्यमाभ्यां नमः । ॐ **यत्पुरुषेण॰**–अनामिकाभ्यां नमः । ॐ **सप्तास्यासन॰**–कनिष्ठाभ्यां नमः । ॐ **यज्ञेन॰**–करतलकरपृष्ठाभ्यां नमः ।

**गणपति पूजन—**

सुपारीपर मौली लपेट चावलोंपर स्थापित कर नीचे लिखा ध्यान करके आवाहन मन्त्रसे अक्षत छोड़ें । मूर्त्ति हो तो पुष्प छोड़ें ।

**गजाननम्भूतगणादिसेवितं कपित्थजम्बूफलचारुभक्षणम् । उमासुतं शोकविनाशकारकं नमामि विघ्नेश्वरपादपंकजम् ॥**

आवाहन–**आगच्छ भगवन्देव ! स्थाने चात्र स्थिरोभव ।**
**यावत्पूजां करिष्यामि तावत्त्वं सन्निधौ भव ॥**

प्रतिष्ठा–**अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।**
**अस्यै देवत्वमर्चायै मामेहति च कश्चन ॥** प्रतिष्ठापयामि ।

आसन–**रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् ।**
**आसनञ्च मया दत्तं गृहाण परमेश्वर ! ॥** आ॰ समर्पयामि ।

पाद्य– **उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् ।**
**पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥** पा॰ स॰

अर्घ्य–**अर्घ्यं गृहाण देवेश गन्धपुष्पाक्षतैः सह ।**
**करुणां कुरु मे देव ! गृहाणार्घ्यं नमोस्तु ते ॥** अ॰ स॰

आचमन—सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् ।
आचम्यतां मया दत्तं गृहीत्वा परमेश्वर ! ॥ आ० स०

स्नान—गङ्गा-सरस्वती-रेवा—पयोष्णी—नर्मदाजलैः ।
स्नापितोसि मया देव तथा शांति कुरुष्व मे ॥ स्न०

दुग्धस्नान—कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम् ।
पावनं यज्ञहेतुश्च पयःस्नानार्थमर्पितम् ॥ दु० पुन०

दधिस्नान—पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।
दध्यानीतं मया देव ! स्नानार्थं प्रतिगृह्यताम् ॥ द० स्ना०

घृतस्नान—नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् ।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥ पु० ज० स०

मधुस्नान—तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ।
तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ पु० ज० स०

शर्करास्नान—इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ।
मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ श० स्ना०

पञ्चामृतस्नान—पयो दधि घृतं चैव मधु च शर्करायुतम् ।
पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥ पं० स्ना० स०

शुद्धस्नान—मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ।
तदिदं कल्पितं देव ! स्नानार्थं प्रतिगृह्यताम् ॥

वस्त्र—सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥ वस्त्रं० स०

उपवस्त्र—सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः ।
वासोऽअग्ने विश्वरूपः संव्ययस्व विभावसो ॥ उ० स०

यज्ञोपवीत—नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।
उपवीतं मया दत्तं गृहाण परमेश्वर ! ॥ यज्ञो० । आच०

मधुपर्क—कांस्ये कांस्येन पिहितो दधिमध्वाज्यसंयुतः ।
मधुपर्को मयानीतः पूजार्थं प्रतिगृह्यताम् ॥ म० । आच०

गन्ध—**श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।**
**विलेपनं सुरश्रेष्ठ ! चन्दनं प्रतिगृह्यताम् ॥** गं० स०

रक्तचन्दन—**रक्तचन्दनसमिश्रं पारिजातसमुद्भवम् ।**
**मया दत्तं गृहाणाशु चन्दनं गन्धसंयुतम् ॥** र० स०

रोली—**कुङ्कुमं कामनादिव्यं कामनाकामसम्भवम् ।**
**कुंकुमेनार्चितो ! देव गृहाण परमेश्वर ! ॥** कुं० स०

सिन्दूर—**सिन्दूरं शोभनं रक्तं सौभाग्यं सुखवर्द्धनम् ।**
**शुभदं कामदं चैव सिन्दूरं प्रतिगृह्यताम् ॥** सिं० स०

अक्षत—**अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः ।**
**मया निवेदिता भक्त्या गृहाण परमेश्वर ! ॥** अ० स०

पुष्प—**पुष्पैर्नानाविधैर्दिव्यैः कुमुदैरथ चम्पकैः ।**
**पूजार्थं नीयते तुभ्यं पुष्पाणि प्रतिगृह्यताम् ॥** पु० स०

माला—**माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।**
**मयानीतानि पुष्पाणि गृहाण परमेश्वर ! ॥** पु० मा० स०

बिल्वपत्र—**त्रिशाखैर्बिल्वपत्रैश्च अच्छिद्रैः कोमलैः शुभैः ।**
**तव पूजां करिष्यामि गृहाण परमेश्वर ! ॥** बि० प० स०

दूर्वा—**त्वं दूर्वेऽमृतजन्मासि वन्दितासि सुरैरपि ।**
**सौभाग्य सन्ततिं देहि सर्वकार्यकरी भव ॥** दू० स०

दूर्वाङ्कुर—**दूर्वांकुरान् सुहरितानमृतान् मंगलप्रदान् ।**
**आनीतांस्तव पूजार्थं गृहाण गणनायक ! ॥** दूर्वां० स०

शमीपत्र—**शमी शमय मे पापं शमी लोहितकंटका ।**
**धारिण्यर्जुनवाणानां रामस्य प्रियवादिनी ॥** श० स०

आभूषण—**अलङ्कारान्महादिव्यान्नानारत्न विनिर्मितान् ।**
**गृहाण देवदेवेश ! प्रसीद परमेश्वर ! ॥** आ० स०

अबीरगुलाल—**अबीरं च गुलालं च चोवाचन्दनमेव च ।**
**अबीरेणार्चितो देव ! अतः शान्ति प्रयच्छ मे ॥** अ० स०

सुगन्ध तैल—चम्पकाशोकवकुलमालतीमोगरादिभिः ।
वासितं स्निग्धताहेतु तैलं चारु प्रगृह्यताम् ॥ सु० स०

धूप—वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ धू०

दीप—आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश ! त्रैलोक्यतिमिरापहम् ॥ दी० स०

नैवेद्य—शर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् ।
उपहारसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ नै० निवेदयामि

मध्ये पानीय—अतितृप्तिकरं तोयं सुगन्धि च पिबेच्छया ।
त्वयि तृप्ते जगत्तृप्तं नित्यतृप्ते महात्मनि ॥ म० पा० स०

ऋतुफल—नारिकेलफलं जम्बूफलं नारङ्गमुत्तमम् ।
कूष्माण्डं पुरतो भक्त्या कल्पितं प्रतिगृह्यताम् ॥ ऋ०

आचमन—गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् ।
आचम्यतां सुरश्रेष्ठ ! शुद्धमाचमनीयकम् ॥ आ०

अ० ऋ०—इदं फलं मया देव ! स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ अ० ऋ० स०

ताम्बूलपूगीफल—पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।
एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ तां० स०

दक्षिणा—हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ द० द्रव्यं० स०

आरती—चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।
त्वमेव सर्वज्योतींषि आर्त्तिक्यं प्रतिगृह्यताम् ॥ आ० स०

पुष्पा—नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च ।
पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वर ! ॥ पु० स०

प्रार्थना—रक्ष रक्ष गणाध्यक्ष ! रक्ष त्रैलोक्यरक्षक ! ॥
भक्तानामभयं कर्त्ता त्राता भव भवार्णवात् ॥
"अनया पूजया गणपतिः प्रीयतां न मम ॥"

——:o:※※:o:——

## कलश-पूजन

अष्टदल कमल बना धान्य रख उसपर कलश-स्थापन करें।

भू० स्प० ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसीः॥ धान्यः— ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा। दीर्घामनुप्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि॥

सप्तधान्य पर कलश स्थापन—ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः। सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः॥

कलश में जल—ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भ सर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद॥

क० में गंध— ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ गं० स०

कलश में सर्वौषधि—ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा। मनैनु बभ्रूणामह शतन्धामानि सप्त च॥

कलश में दूर्वा— ॐ काण्डात् काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवानो दूर्वे प्रतनु सहस्रेण शतेन च॥ दू० स०

कलश पर पञ्च-पल्लव— ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता। गोभाज इत्किलासथ यत्सनवथ पूरुषम्॥

कलश में सप्तमृत्तिका—ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म्म सप्रथाः॥ स० मृ० स०

पूगीफल—ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व हसः॥

कलश में पञ्चरत्न—ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे॥

कलश में सुवर्ण या द्रव्य—ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ द्र० स०

वस्त्र—ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः॥ वस्त्रं० स०

पूर्णपात्र—ॐ **पूर्णादर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जंशतक्रतो ॥** पू० पा० स०

श्रीफल (कलस पर रखे) **ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्म इषाण सर्वलोकम्म ईषाण ॥** श्रीफलं समर्पयामि ॥

( नारियल पर लाल वस्त्र लपेट कर पूर्णपात्र पर रखे )

वरुणावाहन—ॐ **तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुश स मा न आयुः प्रमोषीः ॥** (अस्मिन् कलशे वरुणं सांगं सपरिवारं सायुधं सशक्तिकमावाहयामि) **ॐ भूर्भवः स्वः भो वरुण इहागच्छ इह तिष्ठ । स्थापयामि पूजयामि ॥**

देवावाहन—**सर्वे समुद्राःसरितस्तीर्थानि जलदा नदाः आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः । कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः अत्र गायत्री सावित्री शान्तिः पुष्टिकरो तथा ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥**

प्रतिष्ठा—ॐ **मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु । विश्वेदेवा स इह मादयन्तामोम् प्रतिष्ठ ॥ कलशे वरुणाद्यावाहिता देवताः सुप्रतिष्ठिताः वरदाः भवन्तु ॥**

[ पूजन कर नीचे लिखी प्रार्थना करे । ]

**देवदानवसंवादे मथ्यमाने महोददधौ । उत्पन्नोऽसि यदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्राः विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ प्रसन्नो भव ॥ वरदो भव । "अनया पूजया वरुणाद्यावाहिता देवताः प्रीयन्तां न मम" ॥** (अक्षत छोड़े)

**नवग्रह पूजन**

बाँये हाथमें अक्षत ले दाहिने हाथसे प्रत्येक मन्त्रसे अक्षत छोड़े ।

**सूर्य-मण्डलके मध्यमें** (गोलाकार, लाल)

ॐ आ **कृष्णेन रजसा वर्तमानो निवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेन सविता रथेना**

देवो याति भुवनानि पश्यन् ॥ ॐ भूर्भुवः स्वः सूर्य इहागच्छ इह तिष्ठ । सूर्याय नमः ।

चन्द्र अग्निकोणमें (अर्धचन्द्र, श्वेत)

ॐ इमं देवा असपत्न सुबध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्र-स्येन्द्रियाय । इममुष्य पुत्रममुष्यै पुत्रमस्यै शिव एष वोऽमी राजा सोमो ऽस्माकं ब्राह्मणानां राजा ॥ ॐ भूर्भुवः स्वः चन्द्र इहागच्छ । इह तिष्ठ । सोमाय नमः ।

मङ्गल-दक्षिणमें (त्रिकोण लाल)

ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपा रेतासि जिन्वति ॥ ॐ भूर्भुवः स्वः भौम इहागच्छ । इहतिष्ठ । भौमाय नमः ।

बुध ईशान कोणमें (हरा वाण)

ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सस‍ृजेथामयं च । अस्मिन्त्सधस्थे अध्युत्तर-स्मिन् विश्वेदेवा यजमानश्च सीदत ॥ ॐ भूर्भुवः स्वः बुध ! इहागच्छ इहतिष्ठ । बुधाय नमः ।

वृहस्पति-उत्तरमें (पीला अष्टदल)

ॐ वृहस्पते अति यदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवश ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ॐ भूर्भुवः स्वः वृहस्पते इहागच्छ ! इहतिष्ठ । वृह० नमः ।

शुक्र-पूर्वमें (श्वेत पञ्चकोण)

ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिवत्क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपानशुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोमृतं मधु ॥ ॐ भूर्भुवः स्वः शुक्र ! इहा० । इह तिष्ठ । शुक्राय नमः ॥

शनि-पश्चिममें (काला मनुष्य)

ॐशन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥ ॐभूर्भुवः स्वः शनैश्चर इहागच्छ । इहतिष्ठ । शनै० नमः ।

राहु नैर्ऋत्य कोणमें (काला मकर)

ॐकया नश्चित्र आभुव दूती सदावृधः सखा । कया शचिष्ठया वृता ॥ ॐभूर्भुवः स्वः राहो इहागच्छ । इहतिष्ठ । राहवे नमः ॥

### केतु-वायव्य कोणमें (काली ध्वजा)

ॐकेतुं कृण्वन्नकेतवे पेशोमर्य्या अपेशसे । समुषद्भिरजायथाः ।। ॐभूर्भुवः स्वः केतो ! इहाग० इह तिष्ठ । केतवे नमः । ॐसूर्यादि-नवग्रहेभ्यो नमः ।। पूजन करके नीचे लिखी प्रार्थना करे । ॐब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहु केतवः सर्वे ग्रहाः शान्तिकरा भवन्तु ।। "अनया पूजया सूर्यादिनवग्रहाः प्रीयन्तां न मम" ।। अक्षत छोड़े ।

### पञ्चलोकपाल पूजन

बायें हाथमें अक्षत ले दाहिने हाथसे प्रत्येक मन्त्रसे अक्षत छोड़े ।

गणपति—ॐगणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो मम । आहमजानिगर्भधमा त्वमजासि गर्भधम् ।। ॐभूर्भुवः स्वः गणपते ! इहागच्छ इह तिष्ठ गणपतये नमः ।।

देवी—ॐजातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः ।। ॐभूर्भुवः स्वः दुर्गे ! इहागच्छ इह तिष्ठ । दुर्गायै नमः ।।

वायु—ॐ आ नो नियुद्भिः शतिनीभिरध्वर सहस्त्रिणीभिरुपयाहि यज्ञम् । वायो अस्मिन्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः ॐ भूर्भुवः स्वः बायो ! इहागच्छ इह तिष्ठ । वायवे नमः ।।

आकाश—ॐ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा ।। ॐभूर्भुवः स्वः आकाश ! इहागच्छ इह तिष्ठ । आका० नमः ।।

अश्विनी—ॐ या वाङ्कशा मधुमत्यश्विना सुनृतावती । तया यज्ञम्मिमिक्षतम् ।। उपयाम गृहीतोऽस्यश्विभ्यान्त्वैष ते योनिर्माध्वीभ्यां त्वा ।। ॐ भूर्भुवः स्वरश्विना ! इहागच्छतम् इह तिष्ठतम् अश्विभ्यां नमः ।। (इत्यावाह्य) ॐ गणपत्यादिपञ्चलोकपालेभ्यो नमः ।। पूजन करे । पश्चात्—"अनया पूजया पञ्चलोकपालाः प्रीयन्तां न मम" बोल कर अक्षत छोड़े ।

### दशदिक्पाल पूजन

बायें हाथमें अक्षत लेकर दाहिने हाथसे प्रत्येक मन्त्रसे अक्षत छोड़े ।

इन्द्र—(पूर्वमें) ॐ त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूर मिन्द्रम् । ह्वयामि

शक्रम्पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ।। (इन्द्राय नमः)

अग्नि—(अग्निकोण में) ॐ अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे देवां आसादयादिह ।। (अग्नये नमः)

यम—(दक्षिण में) ॐ असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ।। (यमाय नमः)

निर्ऋति—(नैर्ऋत्य कोणमें) ॐ असुन्वंतम यजमानमिच्छ स्तेन स्येत्या मन्विहि तस्करस्य, अन्यमस्मदिच्छ सात इत्या नमो देवि निर्ऋते तुभ्यमस्तु ।। (न० नमः)

वरुण—(पश्चिम में) ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ।। वरुणाय नमः ।। व० आ० स्था०

वायु—(उत्तरकोण में) ॐ वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञम् शिवो नियुद्भिः (वायवे नमः)

कुबेर—(उत्तर में) ॐ कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम उक्ति यजंति ।। (कुबेराय नमः) कु० आ० स्था०

ईशान—(ईशान कोणमें) ॐ तमीशानञ्जगतस्तस्युषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषानो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ।। (ईशानाय नमः)

ब्रह्मा—(ईशानपूर्वके मध्यमें) ॐ ब्रह्म यज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः स बुध्नया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः (ब्रह्मणे नमः)

अनन्त—(नैर्ऋत्य पश्चिमके मध्यमें) ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ।। (अनन्ताय नमः) अनन्तं आ० स्था०

"ॐ इन्द्रादि दश दिक्पालेभ्यो नम" पूजन करे । पश्चात्—"अनया पूजया दशदिक्-पालदेवताः प्रीयन्ताम्" अक्षत छोड़े ।

### षोड़शमातृका-पूजन

बायें हाथमें अक्षत लेकर दाहिने हाथसे प्रत्येक नामपर अक्षत छोड़े ।

ॐ गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ।।

हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवताः।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोड़श ॥

"ॐ भूर्भुवः स्वः षोड़श मातृकाभ्यो नमः इहागच्छत इह तिष्ठत" ॥
(ॐ गौर्यादि षोड़शमातृकाभ्यो नमः) ॥

पूजन करके नीचे लिखी प्रार्थना करे।

ॐ जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥

'अनया पूजया गौर्यादिषोड़शमातरः प्रीयन्तां न मम' (अक्षत छोड़े)।

## चतुःषष्ठि—योगिनी-पूजन

बांये हाथमें अक्षत लेकर दाहिने हाथसे नीचे लिखे मन्त्रसे छोड़ता जावे।

आवाहयाम्यहं देवीः योगिनीः परमेश्वरीः।
योगाभ्यासेन सन्तुष्टाः परध्यानसमन्विताः ॥
चतुःषष्ठिः समाख्याता योगिन्यो हि वरप्रदाः।
( ॐ चतुःषष्ठियोगिनीमातृकाभ्यो नमः )

पूजन करके नीचे लिखे वाक्यसे अक्षत छोड़े।
"अनया पूजया चतुःषष्ठियोगिन्यः प्रीयन्तां न मम"

## रक्षा-विधान

बाँये हाथमें पीली सरसों अथवा चावल, द्रव्य और तीन तारकी मोली लेकर दाहिने हाथसे ढककर नीचे लिखे मन्त्र बोले।

ॐ गणाधिपं नमस्कृत्य नमस्कृत्य पितामहम्। विष्णुं रुद्रं श्रियं देवीं वन्दे भक्त्या सरस्वतीम् ॥ स्थानाधिपं नमस्कृत्य ग्रहनाथं निशाकरम्। धरणीगर्भसम्भूतं शशिपुत्रं वृहस्पतिम् ॥ दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं महाग्रहम्। राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेषतः ॥ शक्राद्या देवताः सर्वाः मुनींश्चैव तपोधनान्। गर्गं मुनिं नमस्कृत्य नारदं मुनिसत्तमम् वसिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलम्। व्यासं मुनिं नमस्कृत्य सर्वशास्त्रविशारदम् ॥ विद्याधिका ये मुनयः आचार्याश्च तपोधनाः। तान् सर्वान् प्रणमाम्येवं यज्ञरक्षाकरान् सदा ॥

नीचे लिखे मन्त्रोंसे दशों दिशाओंमें पीली सरसों या चावल छोड़े ।

**पूर्वे रक्षतु वाराहः आग्नेयां गरुड़ध्वजः । दक्षिणे पद्मनाभस्तु नैर्ऋत्यां मधुसूदनः ।। पश्चिमे चैव गोविन्दो वायव्यां तु जनार्दनः । उत्तरे श्रीपती रक्षेत् ईशाने तु महेश्वरः ।। ऊर्ध्वं रक्षतु धाता वो ह्यधोऽनन्तश्च रक्षतु । एवं दशदिशो रक्षेद् वासुदेवो जनार्दनः ।। रक्षाहीनन्तु यत्स्थानं रक्षत्वीशो ममाद्रिधृक् । यदव संस्थितं भूतं स्थानमाश्रित्य सर्वदा । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्रं गच्छतु । अपक्रामन्तु ते भूता ये भूता भूतले स्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया । अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन पूजाकर्म समारभे ।**

पश्चात् मोली गणेशजीके सम्मुख रख देवे । फिर उस मोलीमें से गणपत्यादि समस्त देवताओंको चढा कर रक्षा बन्धन करे ।

### ब्राह्मण-रक्षाबन्धन-मन्त्र

ब्राह्मणके हाथमें दक्षिणा देकर रक्षा बांधे ।

**ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।**
**दक्षिणा-श्रद्धा माप्नोति श्रद्धया सत्यमाप्यते ।।**

### ब्राह्मण-तिलक-मन्त्र

**ॐ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।**
**जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ।।**

### यजमान-रक्षाबन्धन मन्त्र

**येन बद्धो बली राजा दानवेन्द्रो महाबलः ।**
**तेन त्वामनुबध्नामि रक्षे मा चल मा चल ।।**

### यजमान-तिलक मन्त्र

**शतमानं भवति शतायुर्वै पुरुषः ।**
**शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन् धत्ते ।।**

### शालग्राम-पूजन

शालग्राम तथा प्रतिष्ठित मूर्त्तिमें आवाहन नहीं करे । केवल पुष्प छोड़े ।

आवाहन—**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।**
**सभूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशांगुलम् ।।** आवा०

आसन—ॐ पुरुष एवेद सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ आ० स०

पाद्य—ॐ एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ पा०

अर्घ्य—ॐ त्रिपादूर्ध्वं उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ अ० स०

आचमन—ॐ ततो विराडजायत विराजो अधिपूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ आ० स०

स्नान—ॐ तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ स्ना० स०

दुग्ध—ॐ पयः पृथिव्यां पय औषधीषु पयो दिव्यन्तरिक्षे पयोधाः ।
पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ दु० स्ना० स० पु०

दधि—ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभिनो मुखाकरत्प्रण आयूंषि तारिषत् ॥ द० स्ना०

घृत स्नान—ॐ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा ॥ घृ० स्ना० स०

मधु स्नान—ॐ मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसो मधुमत्पार्थिव रजः । मधुद्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमां-ऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ म० स्ना० स० । पुनर्जलस्नानं समर्पयामि ।

शर्करा—ॐ अपा रसमुद्वयस सूर्ये सन्त समाहितम् । अपा रसस्य यो रसस्तं वो गृहणाम्युत्तममुपयाम गृहीतोऽसीन्द्राय त्वा जुष्टं गृहणाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ श० स्ना० स० । पु० स०

पञ्चामृतस्नान—ॐ पंचनद्यः सरस्वतीमपियन्ति सस्रोतसः ।
सरस्वती तु पंचधा सो देशेऽभवत्सरित् ॥ पं० स्ना० स०

शुद्धोदक स्नान—कावेरी नर्मदा वेणी तुङ्गभद्रा सरस्वती । गङ्गा च यमुना चैव ताभ्यः स्नानार्थमाहृतम् ॥ गृहाण त्वं रमाकान्त स्नानाय श्रद्धया जलम् ॥ शु०स्ना०स०

वस्त्र—तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ व० उपवस्त्रं० स० ।
पुनराचमनीयं समर्पयामि ।

यज्ञो०—ॐ तस्मा दश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ य० स०

मधुपर्क—दधि मध्वाज्यसंयुक्तं पात्रयुग्म-समन्वितम् ।
मधुपर्कं गृहाण त्वं वरदो भव शोभन ॥ म० स० आ० स०

गन्ध—ॐ तं यज्ञम्बर्हिषि प्रोक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ गं० स०

अक्षत—( श्वेततिल चढावे किन्तु चावल नहीं ) ।
ॐ अक्षन्न मीमदन्त ह्यवप्रिया अधूषत अस्तोषत
स्वभानवो विप्रा नविष्ठया मती यो जान्विन्द्र ते हरिः ॥

पुष्प—ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पा सुरे स्वाहा ॥ पु० स०

पुष्पमाला—ॐ ओषधीः प्रतिमोदध्वम्पुष्पवती प्रसूवरीः ।
अश्व इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ पु० मा० स०

तुलसीपत्र—ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखङ्किमस्यासीत्किम्बाहू किमूरू पादा उच्येते ॥ तु० स०

तुलसीं हेमरूपां च रत्नरूपाञ्च मञ्जरीम् ।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् ॥ तु० स०

ॐ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥ तु० समर्पयामि नमः ।

बिल्वपत्र—तुलसीबिल्वनिम्बैश्च जंबीरैरामलैः शुभैः ।
पञ्चबिल्वमिति ख्यातं प्रसीद परमेश्वर ! ॥ बि० स०

दूर्वा—विष्ण्वादिसर्वदेवानां दूर्वे त्वं ! प्रीतिदा सदा ।
क्षीरसागरसंभूते ! वंशवृद्धिकरी भव ॥ दू० स०

शमीपत्र—शमी शमयते पापं शमी शत्रुविनाशिनी ।
धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥ श० स०

आभूषण—ॐ रत्नकङ्कणवैदूर्यमुक्ताहारादिकानि च ।
सुप्रसन्नेन मनसा दत्तानि स्वीकुरुष्व भोः ॥ आ० स०

अबीर-लाल—नानापरिमलैर्द्रव्यै निर्मितं चूर्णमुत्तमम् ।
अबीरनामकं चूर्णं गन्धं चारु प्रगृह्यताम् ॥ अ० स०

सुगन्ध तैल—ॐ तैलानि च सुगन्धीनि द्रव्याणि विविधानि च ।
मया दत्तानि लेपार्थं गृहाण परमेश्वर ॥ सु० तैल० स०

धूप—ॐ ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद् वैश्यः पद्भ्या शूद्रो अजायत ॥१॥

धूप—ॐ धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मान् धूर्वति तं धूर्वयं वयं धूर्वामः ।
देवानामसि वह्नितमम् सस्नितमं पप्रितमं जुष्टतमन्देवहूतमम् ॥२॥ धूपमाघ्रापयामि ॥

दीप—ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ दीपं दर्शयामि ।

**नैवेद्य** ( तुलसी छोड़कर मुद्रा देखावे )

'**प्राणाय स्वाहा**'–कनिष्ठा, अनामिका और अंगूठा मिलावे ॥१॥
'**अपानाय स्वाहा**'–अनामिका, मध्यमा और अंगूठा मिलावे ॥२॥
'**व्यानाय स्वाहा**'–मध्यमा, तर्जनी और अंगूठा मिलावे ॥३॥
'**उदानाय स्वाहा**'–तर्जनी, मध्यमा, अनामिका और अं० मिलावे ॥४॥
'**समानाय स्वाहा**'–सब अंगूलियां तथा अंगूठा मिलावे ॥५॥

ॐ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां २ अकल्पयन् ॥ यत् पुरुषेण हविषा देवा यज्ञ मतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः देवा यद्यज्ञन्तन्वाना अबध्नन्पुरुषम्पशुम् ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः । समवर्तताग्रे तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ वेदाहमेतम्पुरुषम्महान्त-

मादित्य वर्णन्तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते । तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा॥ यो देवेभ्य आतपति यो देवानाम्पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये । रुचम्ब्राह्मञ्जनयन्तो देवा अग्रे तदब्रुवन् । यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणा मुम ईषाण सर्वलोकम्म ईषाण ॥ नैवेद्यं निवे०

मध्ये पानीयं—एलोशीरलवङ्गादि कर्पूरपरिवासितम् ।
प्राशनार्थं कृतं तोयं गृहाण परमेश्वर ! ॥ म० स०

ऋतुफल—बीजपूराम्र-पनस-खर्जूरी-कदली-फलम् ।
नारिकेलफलं दिव्यं गृहाण परमेश्वर ! ॥ ऋ० स०

आचमन—कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।
आचम्यतां जगन्नाथ ! मया दत्तं हि भक्तितः ॥ आ० स०

अखण्ड ऋतुफल—फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ।
तस्मात् फलप्रदानेन पूर्णाः सन्तु मनोरथाः ॥ अ० स०

ताम्बूल पूगीफल—ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ तां० स०

दक्षिणा—पूजाफलसमृद्ध्यर्थं दक्षिणा च तवाग्रतः ।
स्थापिता तेन मे प्रीतः पूर्णान् कुरु मनोरथान् ॥ द० स०

## आरती

प्रथम चरणोंकी चारवार, नाभीकी दोवार, मुखकी एक या तीनवार और समस्त अङ्गोंकी सातवार आरती करे । पश्चात् शंखजल भक्तों पर छिड़के ।

कदलीगर्भसम्भूतं कर्पूरन्तु प्रदीपितम् ।
आरार्तिकमहं कुर्वे पश्य मां वरदो भव ॥